# उत्तरपक्षावली।

पं॰भगवत्प्रसाद शर्म्मणा

संशोधिता

काश्याम्।

पण्डितवर जयरामशर्म्मणा स्वकीय

तिमिरनाशकयन्त्रालये

मुद्रापिता

सं॰ १९४७

# ओं परमात्मने नमः॥

---

उत्तरपद्यावली ।

विद्याविनोदचतुरंविद्यादंविघ्ननाशनम् ।
तथाविधंमन्मुदेवंगुरुं वाग्देवतांभजे ॥ १ ॥
प्रश्नावल्याहोरिजस्ययेप्रश्नाःपंडितैःकृताः
तेषांसदुत्तरार्थायक्रियतेउत्तरावली ॥ २ ॥

तत्रतावत्धातोस्तन्निमित्तस्यैतिकिं चोयते चौ-यतेतिमूलोक्तदोषनाशाय नयकीतिन्यासःतत्समाधानं आचारक्विबंतप्रकृतिककर्तृक्विबंतगोग्लौशब्दादिभ्यः त वसाधुरिति गौयम्लौयमित्यादियथाविजंतभूधातोर्भो इत्यस्माद्यतिभोयमित्यादौ चधातोरेवयादिप्रत्ययभिन्न-मित्यस्य वांतादेशो माभूदिति नयकीतिन्यासोदु-ष्टः इकोगुणवृद्धीवदन्नजे रिति चोतग्रयनीति चा-देचउपदेशसुत्रस्थभाष्यप्रामाण्यादेजंतेभ्य आचारक्वि-पोऽभावे तु भोयमित्यादा ववय्यंदोषात् सन्यासो दुष्ट एव अतः अन्यत्समाधानं विभावयंतु सुधिय इत्युक्तं तत्र समाधानांतरमुक्तं भाष्यविरुद्ध तु धातो रितावयवषष्ठैव उत्शंभुस्तमिच्छति ऊयति आऊ यति चोयति लङि औयदित्यादौ यथा न्यासेन वांतादेशः क्यजंतधातो रवयवस्यैवचोयादिप्रत्ययनि

मित्तत्वाभावा न्नयकीति न्यासे तु स्याद्वाध: गव्यति नाव्यतिइत्यादौ तु व्यधिकरणकापष्ठ्यां चिंत्यो वांता देश: यदि तन्निमित्तस्ये त्यनेन यादिप्रत्ययभिन्ननि मित्तस्यै वेचो वांतादेशव्याहति रिष्येत तदा स्वाभावि- कस्यै येचो वांतादेशे सिध्यति गव्यती त्यादि सामा न्यस्य व्याहत्तौ तु नसिध्येदिति तत्त्वप्रकाशिकायां स्पष्टं चकितद्धितयो. इति न्यासे यादौ तद्धिते च वां- तादेशनिषेधे तुवाभ्रव्यं गव्यतीत्यादि न सिध्येत् न. तौतिन्यासे ष्योयते इति नक्तितीति न्यासे गव्य मि त्यादि च न सिध्येत् वांतोयिप्रत्यये दृश्यते इति व हुलं इति च क्षते यद्वा इप्रत्यये स्वरवहुल मितिक्षते यांतवांतादेशावाहुलका इति सिद्धौ वहूनां वांतवि धीनां वैव्यर्थ्यं तथापि लक्ष्यानुसरणार्थ इति सुहृ- दृभूत्वाऽऽचार्य स्तथा न क्षतवान् अतएव पाणिनीया नां क्वचि त्स्वरवयकार इत्यपास्तं लक्षणस्य चक्षुदाद्यु- द्देशेन क्षतत्वात् एतदे वैकचक्षुष्कायां तं विनालक्ष- णं लक्ष्यदर्शन मात्रकथनासूयाकर्तव्या अत्रानुगम इ- तिभाष्या दननुगम एव लक्ष्यदर्शनं शरणं सति प्रा- माण्य इति वोध्यं यदुक्तं वातो यीत्यस्य तत्सूत्रस्य भाष्या द्धातुविषयत्वाद्धातो रित्यारब्धमृषिणे ति तद्धातुरित्येतत्सूत्रस्थभाष्यविरुद्धं निर्मूलं च तथा हि प्रकृति सूत्रे भाष्ये एवकार: किमर्थ: नियमार्थ: नैतदस्ति प्रयोजनं सिद्धे सत्यारम्भमाणातदेणे यथा

र्नियमार्थं भविष्यति इत्यतोऽवधारणार्थः तर्हि शंक-
ध्य मित्यादौ यदि स्यादित्युक्तेः यत्तु, असिद्धं बहि-
रंगपरिभाषाया ऊठ्ग्रहणं ज्ञापकं इति भाष्ये दूषणं
दत्तं ऊठ्ग्रहणं कथं ज्ञापकं प्रष्ठौहेत्यादौ विभक्त्युदा
त्तार्थं तदकरणे ऊडिदं पदाद्यप्पुम्रैद्युभ्यः परासर्व-
नामस्थानविभक्तिरुदात्ता स्यादिति न प्रवर्तते इत्युक्ता-
मृतदिष्टापत्तेरदुष्टं वाहःस्थाने च ऊठ् तस्य तेनाचत्व
मितितद्भाष्यतो लाभात् कथ मन्यथा व्यूह इत्यादे-
रनभिधानमिति विभावय ज्वरत्वरेत्यादिविहिता ऊठि
जूः जूरौ तूः तूरौ त्यादावेव तत्प्रवृत्तेः तदुक्तं परिभा-
षेंदुशेखरे प्रौष्ठ इत्याद्यसाध्वेव वृद्धेः प्राप्ते अन्ये तु परि-
भाषाश्रयं विना न विधानं वर्णयंति ऊडिदमित्यत्र च-
विदमेवास्तु कोर्थः यस्य दीर्घऊकारो यत्र वाशब्दस्य ह्र-
स्वउकारो यत्र ततः पराऽसर्वनामस्थानविभक्तिरुदा-
त्ता स्यादि ति आद्यस्य जूः जूरे त्यादि द्वितीयस्य-
विश्वौह इत्याद्युदाहरणं वस वास वो द्वंद्वे कृते लो-
पोव्योरिति वलोपः वस जस्वे ति दीर्घह्रस्वयो र्द्वंद्वे
कृते षष्ठीतत्पुरुषः ववास्थाने यौ दीर्घह्रस्वौ उकारौ
ताभ्यां पराऽ सर्वनामस्थानविभक्ति रुदात्तेति तद-
र्थः सोऽइदमित्यवा वादेशः इदमपि समाधानं संदि-
ग्धं क्लिष्टं लोपोव्योरिति सूत्रस्थवकारप्रत्याख्यानपर-
भाष्यविरुद्धं चे त्यरुचे रुक्तं दीर्घोच्चारणा मूठोस्यां
परिभाषायां ज्ञापकं संप्रसारणे निमित्तं गुणे वृद्धि-

रेचीति सूत्रौ विश्वौह इत्यादिसिद्धेरिति तदपिचिं-
त्यं दीर्घोच्चारणस्यैधत्यूठ्स्विति विशेषणार्थत्वशेखरे स्फु
टं जनानयति इति जनौ रित्याद्यर्थं मुक्तत्वात्ज्वर
त्वरेत्यत्रापि ऊसकरणे यथादुरितादासिद्धेः इतेनो
ङिदमित्यत्रापि ऊसुएव पठ्यते तत्परास्त किंच चतुर
नुडोनद्यजादीत्यस्याग्रे वाहइतिपठित्वा वाहः परे
नद्यजादौ उदात्ते सः इत्यवसिद्धे ऊठ्गहणंव्यर्थमि
त्युक्त्वा वाहानद्या उदात्तविधाना द्वाहइति ङीविधि-
रपि नापूर्वइतिभाष्याशयः तस्यापि मंतोदात्तादुत्तर
पदादन्यतरस्यामनित्यसमास इत्यस्याग्रे पाठेन ज्ञाप
कपरभाष्यप्रामाण्येन तस्य व्यवस्थितविभाषापरत्वा
दिष्टस्वरसिद्धिरित्युक्तं तदपि न वाह इत्युक्ते ऊडिद-
मित्यत्रोठोकरणे जूर इत्यादौ स्वरासिद्धिः तत्रोठिकृते
वाह इत्यस्यापि करणे वाह इति ङीविधिज्ञापकसि-
द्ध इति लाघवं यद्यप्यस्ति तथापि अनभिधानमे-
वशरणं तत्रापि कथमन्यथा वाहोङीप्ज्ञापकादूङेति
तर्क्यताम् तस्यापि यूस्त्र्याख्याविति नदीत्वात् कथं-
वा श्रीमद्भिः प्रवाहेरित्यादौ मरादिवद्भावेन वाहइ
त्यनेन प्राप्तः स्वरो वाधात् किंच तस्य वाह्यप्रयत्ने इत्य-
स्य वाहइत्यादौ त्वदुक्तव्यवस्थितविभाषाश्रयणं च प्र-
माणं किं चोठ्स्वरस्य विश्वौह इत्यादौ दृष्टत्वज्ञापक-
परभाष्यविरोध एवेति तत्स्वराभिधानस्य भाष्यकारा
नभिप्रेतत्व मेव लभ्यत इतिदिक्॥२॥यत्तु विभक्तौ चे-

ति व्यर्थे प्रदेशे क्वचि यथायथं सुप्तिङ्ग्रहणे न सुग्रहणे-
न चेष्टसिद्धेः अनष्ट इत्य च सुपीत्येवास्तु त्यदादीनाम इ-
त्य सुपीत्यनुवृत्तौ यत्र तत्र त्यादा दत्वं तुप्राग्दिशीयानां
सुप्संज्ञयैव सिद्धे सुपिचेतात्र सुपि यभि इतिन्यासेनै-
तद्दीनतादौ अदोष: सुपोधातुरिति सुपोलुक् सुप्पिता-
विसानुदात्तता च न वणतसिलादीनां विधानसाम-
र्थ्यात् तलादीलित्करणार्थे ति विभावयंतु सुधिय इ-
त्युक्तं तत्र विभक्तिसंज्ञा त्रलादौ प्रयोजन मिदमस्ति
इदमइशादेशे उडिदमिति इदंसुरेण तसउदात्तत्वमि-
ति प्राग्दिशीयइतात्रभाष्ये स्पष्टं ततस्तृतीयद्वित्व मेत-
द्भाष्यगौरवादिति च कैय्यटे तत्र किं यदुक्तं त्रलादी-
नां सुप्संज्ञायांसुपोधातुरिति लुङ् तेषांविधानसाम-
र्थ्यादिति तन्न तद्धिते सति प्रातिपदिकसंज्ञा तस्यां
च तद्धितलोपइति सन्निपातविघातादेवाऽ लुक्सामा-
र्थ्येन अलुक् मशक्यं अव्ययसंज्ञायां तद्धितांता त्सुपोलु-
क् एवं प्रयोजनसत्वात् तस्मादितरार्थं तद्दित्रादेः प्र-
योगफलस्य सत्वात् प्राग्दिशइतात्रकैय्यटे उक्तं ननु म-
ध्येपवादइतिन्याया दनुदात्तौ सुप्पितावितीवं सूरं वि
भक्तिस्वरो बाधते नतु लित्स्वरंलित्स्वर एव तु परत्वाद्विभ-
क्तिस्वरं बाधते नैषदोष: उडिदमित्ये तत्सूत्रंलितीतावा
नुवर्त्तं ते लित्स्वरं बाधित्वा विभक्तिस्वरो भवति तृतीया
दिग्रहणे न तृतीया मारभ्य प्राग्दिशः प्रत्ययोगृह्यत इ-
ति किंचे दानीमो मस्येत्संज्ञानिषेधाय विभक्तिसंज्ञे-

ति स्पष्टं तत्र भाष्ये अन्यथा भिद्यद्भूतान्तादयः पर-
त्वादिति तत्र कैय्यटे स्पष्ट दानीमोदंतसौकारे दो-
षाभावेपि उक्तस्थले तस उदात्तत्वफलं विभक्तिसंज्ञा-
याः प्रयोजनं इति भाष्ये स्थितं प्राग्दिशीयानां सुप्सं-
ज्ञायां सुप्तिङन्तमिति दानीमोमस्त्वेतु न जडिदमि
तात्रापि सुबेव संबध्यते सचेकाचइतात्रापि वि भक्ति
स्थाने सुप्करणादित्यदोष इति चेत्तर्हि अष्टाविधा-
चरति तृचारक्तिवंतादष्टनशब्दात्सटस्तु विभयंबाधि-
त्वा परत्वात्प्रतिपदोक्तत्वाद्विभक्तिग्रहणसामर्थ्याच्च न
स्यात्वे ष्टालीतिकृते तन्न स्यात् तस्मादष्टनइति वि-
भक्तिग्रहणं कार्यं तसादीनां विभक्तिसंज्ञा इष्येतिचेच्चि
त् अथवाऽ ष्टनआसुसिङौ इत्येवास्तु तसादीनां सुप्-
संज्ञा वास्तु विभक्तिश्चेतिनकार्यं मित्यन्ये यदि तु वि-
भक्तिश्च स्यस्य प्रत्याख्याने तएवायङ्गं तर्हि अतिला-
घवात्प्राग्दिशीयानां माभूतां विभक्तिसुप्संज्ञे किंतु
त्यदाद्यत्वफलाय त्यदादीनामप्राग्दिशीयतसादावेवे-
ति पठ्यतां प्राग्दिशीय इति न कर्तव्यं सुपियभीति
चर्तथा ष्टनइत्यत्र सुप्तिङैवास्तु दानीमोमस्य यथा
नत्वतयोरत्रैव इत इत्यंतोदात्तम्तु तत्त्वप्रकाशिका-
यां स्पष्टं॥२॥छुण घूर्णभमणे चलोपधायां चेति दीर्घे
सिद्धे दीर्घोच्चारणं प्रक्रियालाघवार्थमिति शेखरग्रन्थः
स चायुक्तः सूर्छादिषु दीर्घाकरणे ऽप लेखकप्रमादेन
दीर्घकरणात् ऊर्जेत्यपि दीर्घोच्चारणं तथैवोपधायां

चेति सूत्रकरण एव लाघवा दूर्णोतिर्नुलोपश्च भवति-
ह्रस्वेतिवचना दूकारस्यैव दीर्घं इत्यलं॥४॥षात्पदां-
तात् पदांतात्षकारात्परस्य नस्य णत्वंनेत्यर्थः नि-
ष्पानं दुष्पानं अत्रकृत्यचइतिवा भावकरणयोरिति·
वा णत्वं प्राप्तं अत्र ।मनोरमायां पदांतात्किं पु-
ष्णातीति प्रत्युदाहृतं तदयुक्तं ष्टुत्वेन सिद्धे
रिति शंका तत्समाधानं तु रषाभ्यामितिसूत्रे
भाष्ये षकारग्रहणमुत्तरार्थं षात्परस्य नस्य ष्टुत्वेन
निर्वाहात् एवञ्च षात्पदान्तादित्यनेनापि ष्टुत्वस्यैव
निषेधः पदान्तग्रहणाभावे पुष्णातीत्यत्र ष्टुत्वनिषेधे
रूपासिद्धि स्स्पष्टैवेति पण्डिताः वस्तुतस्तु षग्रहण-
मुत्तरार्थमिति रषाभ्यामित्यत्र भाष्ये ऽदर्शना भाष्य-
सामान्यचिंतया.पदान्तषात्परस्य नस्य णत्वमात्रं नि-
षिध्यत इत्यर्थः नच षगणामित्यत्रापि निषेधस्स्यादि-
ति वाच्यम् पदेऽन्तः पदान्तइत्येवभाष्ये सुसर्पिष्केणे-
त्यादौ णत्वसिद्धये व्याख्यानात् पदस्थनकारस्यैव णत्व-
निषेधात् एवञ्च पदान्तग्रहणाभावे सुसर्पिष्केणेति
प्रत्युदाहर्तुं सुचितमिति भाष्यदर्शिनः नहि सुसर्पि-
ष्केणेत्यत्र ष्टुत्वं लभ्य मितिदिक्॥५॥ददातिदधात्यो-
र्विभाषा अनुपसर्गादितयोर्विभाषाशः श्याद्व्यधेति ण-
स्यापवादः शपश्च जुहोत्यादित्वाच्छपः श्लुः श्लाविति
द्वित्वं ददः दधः पक्षे णः दायः धायः इति अनुपस-
र्गादित्येव प्रदः प्रध इति मूलं तत्र पण्डिताः इदं स-

वं मास्तु दद् दाने दध धारणे आभ्यां पचाद्यच् ददः
दधः इति ध्याद्यर्थेति णे युक्ति दायः धाय इति च
सिद्धे रित्याशंक्य समाहितम् अचिकृते न ददः अददः
अत्र नञ्तत्पुरुषे तत्पुरुषेतुल्यार्थतृतीयासप्तम्युपमा-
नाव्ययद्वितीयाकृत्या इत्यनेनाऽव्ययपूर्वपदप्रकृतिस्वर
इष्यते तंबाधित्वा अचकावशक्तौ अजन्तं कान्तं चान्तो-
दात्तं स्या दशक्ता वित्यन्तोदात्त स्यादिति सूत्रम् इ-
ति वस्तुतस्तु समासात्प्रागेवाऽन्तरङ्गत्वा इचकावशक्ता-
वित्यन्तोदात्ते निवृत्ते सति शिष्टत्वेनाऽव्ययपूर्वप-
दप्रकृतिस्वरः सिद्ध एव किन्तु अभ्यस्तानामादिरि-
त्याद्युदात्तार्थं प्रददः प्रदधः इति व्यावृत्त्यर्थं दाञ्धा-
ञोरपि दद दधयोः सिद्धार्थं वचनं तदपि रूपद्वय सि-
भाषाग्रहणं विनैव अनुबन्धवैरूप्या द्वासरूपसूत्रेण वा-
श्प्रत्ययाभ्यां सिद्धं विभाषाग्रहणं नानुबन्धकृतमसा-
रूप्यमिति ज्ञापनार्थमिति वासरूपसूत्रे भाष्ये स्पष्ट-
म्॥३॥चितः अन्त इत्यनुवर्त्तते चितोऽन्तइत्ययं: अव-
वर्त्तिकम् चितः सप्रकृतेर्बह्वकजर्थमिति शेखरे अस्या-
र्थः चित्प्रत्ययप्रकृते रन्तउदात्त इति तदर्थो ननु प्र-
त्ययमात्रस्यान्त इति अत चाकचश्चित्वं ज्ञापक म-
न्यथाऽकच ऐकाच्कत्वेन प्रत्ययस्वरेणैवो दात्तत्वे
सिद्धे तदर्थव्यर्थं सदवज्ञापकमितितास्यनुदात्तेनुङ्
ददुपदेशाल्लसार्वधातुक मनुदात्तमन्ह्विङोरित्यत्रशेखरे
तु अस्मात्परंलसार्वधातुकमनुदात्तंङ्कुङ्घधोङौवर्ज्जं-

यित्वे त्यर्थः रुणद्धीत्यत्र श्नमोमित्वेन परत्वे त्वरय वाधे तत्सन्नियोग शिष्टप्रत्ययाद्युदात्त वाधनमित्युक्तम् अ-र्थग्रन्थः परस्य रविकल्पः यथा मित्त्वेन परत्वे त्वस्य वाधे तत्सन्नियोगशिष्टप्रत्ययाद्युदात्तत्वस्यापि वाधः एव-मकच्यपि प्राक्टेर्ग्रहणेन परत्वे त्वस्य वाधे तत्सन्नि-योगशिष्टप्रत्ययाद्युदात्तस्याप्राप्त्याऽ काच चित्वस्य ज्ञापकतावर्णनमयुक्तमिति विरोधः अचनवीनै रित्थं परिक्रियते उभयशब्दस्य सर्वादिगणे पाठो व्यर्थइति प्र-घट्टके भाष्यग्रन्थे "कस्येदानी काकचोः स्वरे रूपे वा विशेषो ऽस्ती"त्युक्त्वा ऽकचि सन्नियोगशिष्टन्यायस्या-श्रयणे प्रमाणाभाव इत्यन्यदपि विभावयन्तु सुधिय इति यत्त्वचोक्तं चितःस्थाने चित्प्रत्ययप्रकृतेरन्तोदात्त इतिवार्त्तिकार्थं तन्नशोभनम् चप्प्रभृतिप्रत्ययस्य कु-ण्डिनजादेरप्रत्ययस्य चेह ग्रहणमिति कैय्यटविरोधात् वह्वकजर्थमितिप्रतीक मुपादाय वह्वचोऽन्तोदात्तत्वे कार्य्ये चितःसप्रकृतेरिति वचनमिति कैय्यटविरोधाच्च वह्वकच्प्रत्ययवती या प्रकृति स्तस्याश्चन्त उदात्तइ-त्येवार्थो वार्त्तिकस्य एतद्वार्त्तिकप्रत्याख्यानपरभा-ष्यप्रामाण्या च्चायमर्थः तथाहि तर्त्तर्हि वक्तव्यं न व-क्तव्यं पूर्वसूत्रनिर्दिष्टत्वात् चितइतिषाष्ठ्यं चित्त्वा-त्समुदायोऽ न्तोदात्त इत्यर्थः कुण्डिनजादयोऽपि व्य-पदेशिवद्भावा च्चिदन्ताउच्यंत इतिकैय्यटः चितइत्यनै-न चित्त्वतोऽगृहणे ऽकच एकाच्कत्वेन प्रत्ययस्वरेणै-

वा न्तोदात्तत्वसिद्धे तस्य चित्करणाच्चित्त्वत इत्यर्थो लभ्यते समप्रकृतेरिति-बह्वच्कजर्थं मुपादीयते तेन कुण्डिनप्रकृतिष्वदोष इत्युक्तम् चित इत्यनेन चित्वतो-गृहणे पुत्रकाम्यादिषु चित्प्रत्ययान्तेषूपयोगाभावेन बह्वचजर्थ मित्युक्तम् तथैवोदाहृतं च भाष्ये बहुच् बहुभुक्तमित्यादि यथाच् सर्वकै कस्वकैरित्यादि च, यत्तु शेखरयोर्विरोधोद्भावनं तत्र ग्रन्थो मित्वेन प्रत्ययेत्यस्य चाधेऽपि प्रत्यय इत्यस्य प्रकृतिरिष्यत एव प्रत्ययत्वं विना लभ्यमिति ग्रस्थेत्संज्ञानापत्तेः प्रत्ययत्वे चाद्युदात्तः सन्नियोगशिष्टः केनवार्य्येत् क्वचित्तु प्राकृते गृहणा त्वरत्वे त्यस्य सार्थकत्वः प्रकृतिप्रविष्टस्य प्रत्ययत्वे प्रामाण्यफलयो रभावा च्चित इत्यनेन चित्वतोः प्रकृतिप्रत्यययो रविशेषेण, गृहणा त्सन्नियोगशिष्टन्यायसंचारः काकदन्तपरीक्षावद्भातीति चित इति सूत्रे भाष्ये स्पष्टम् ॥८॥ आर्द्धधातुकस्येड्वलादेः इट्संज्ञानिमित्तस्य वलादेरार्द्धधातुकस्येडितिसूत्रार्थः अत्रशेखरे आर्द्धधातुकस्येति किम् जुगुप्सते इति अत्रसूत्रे भाष्ये कस्तद्ग्रहणेोरिति पदसुत्रार्थे विहितस्य वलादेरिति व्याख्ययाऽप्यदोषाभावा दार्द्धधातुकग्रहणं प्रत्याख्यातम् रुदादिभ्यः सार्वधातुक इति नियमादाऽऽस्तां शेते इत्यादावदोष इतिस्थितम् स्यसिच्सीयुडित्यत्र भाष्ये तु चंगस्येड्माभूदित्यार्द्धधातुके इत्यनुवर्त्य योगविभागमाश्रित्य [illegible]

संसर्वा स्यादार्धधातुकस्येडितुयुक्तम् तेनार्धधातुकस्येड्वलादेरिति शेखरग्रन्थोऽपि भाष्यविरुद्धः अत्रेत्थं विरोधोद्धारं कुर्वन्ति पण्डिताः विधिसूत्रे प्रयोजनं नास्तीति प्रत्याख्यानं योगविभागार्थतया प्रयोजनोक्तिः सुसंगत इति शेखर ग्रन्थस्तु आर्धधातुकग्रहणमनुवर्त्यतामिति अत्रेदं तत्त्वम् स्यसिच्सीयुडितिसूत्रस्य भाष्यं तावदेकदेशिसूत्रकाररीत्या प्रवृत्तम् एवसप्तमेयोगविभागः करिष्यते आर्धधातुकस्येट् यावानिट्नाम स सर्व आर्धधातुकस्य भवतीति विज्ञेयं ततो वलादेरिति वलादेरार्धधातुकस्येड् भवतीति भाष्यम् आर्द्धधातुकस्य इत्यस्य प्रत्याख्याने योगविभागस्यैकदेश्युक्तत्वं स्फुटमेव शेखरोपि युक्त एव तथाहि आर्धधातुकस्येतिसूत्रे भाष्ये किमार्धधातुकस्येतिपदाभावे वलादेरंगस्याथप्रत्ययस्येडिति विप्रतिपत्तिं ज्ञात्वा यद्येतत्पदाभावे ऽगस्येडापद्यते तत्पदसत्वेपि आर्द्धधातुकस्य यदंगं तस्येडि त्यापादयितुं शक्यत्वात्तत्क्रियमाणमपीदं विज्ञास्याम इत्युक्तम् अनेन लघ्वप्यरणं सूत्रकारस्यापीति दर्शितम् इदन्तर्हि प्रयोजनं इह माभूत् आस्ते शेते एतदपिनास्तिप्रयोजनं रुदादिभ्यः सार्वधातुके इत्येतन्नियमार्थं भविष्यति रुदादिभ्यएव सार्वधातुके इड् भवति नान्येभ्य इति अत्रकैय्यटः सार्वधातुक एवेति नियमस्तु रुदविदेति तु ग्रसनोः कित्त्वविधाना न्न भविष्यति अनि-

दसनो सदादेशैर्बन्ता श्चेति किल्तुस्यसिद्धत्वात्क्ती
ऽनिर् औपदेशिककित्त्वसद्भावादिति एवमपिहस्तताव-
श्नप्राप्नोति धातोरितिवर्त्तते एवमपिलूभ्यांयूभ्यामत्र-
प्राप्नोति एवन्तर्हि विहितविशेषणं धातुग्रहणं धा-
तोर्योविहितः ननुचधातो- रेवायंविहितः नचायंधा-
तोरित्येवं विहितः क्वपुनर्धातुग्रहणं प्रकृतं स्तद्-
दृधातोरिति तद्वै षष्ठीनिर्दिष्टं पंचमीनिर्दिष्टेन चे-
हविहितं शक्यते विशेषयितुम् अथेदानीषष्ठीनिर्दि-
ष्टेनापि विहितं शक्यते विशेषयितुं शक्यमार्द्धं-
धातुकग्रहणमकर्तु मितिप्रकृतिसूत्रे भाष्येस्थितम् सू-
भ्यामित्यत्रत्समानमेव जुगुप्सतइत्यादर्धधातुका-
ग्रहणाभावेप्य दोषएव सनोऽनार्द्धधातुकत्वफलंग्र-
हणाभावएवतत्रैडागमोनेति फलन्तु भाष्यमतंफलि-
तार्थकथनपरं जुगुप्सतइति प्रत्युदाहरणं च ॥ ८ ॥
व्यपदेशिवद्भावोऽप्रातिपदिकेनेति पूर्वादिनिः सपूर्वा-
च्चेति योगविभागेनज्ञापितं यमन्वयैकयोगं पूर्वात्स-
पूर्वादिनिरित्येषकुर्य्यात् भचात्तपूर्वयोगेइष्टादिभ्य
इत्यत्रसपूर्वादितास्यानुवृत्तिर्नस्यादेवं चानिष्टौतिन
सिध्येदितिवाच्यम् ज्ञापकपरत्वेनदिधिरिति सूत्रभाष्य
प्रामाण्यादिष्टनिष्ठीत्यस्यासाधुत्वात् एकयोगेपि तावत्
उत्तरत्रानुवृत्तौ बाधकाभावाच्च अतएव नान्तादसंख्या-
देरितिसार्थकं मन्यथा ऽचांपिव्यपदेशिवद्भावेन पंच-
मइत्यादावपि संख्यादित्वात्तद्वैयर्थ्यं स्पष्टमेवेति प-

रिभाषेन्दुशेखरेस्पष्टम् अत्रैषविचारोमन्दप्रयोजनः ६
पूर्वत्रासिद्धम् सपादसप्ताध्याय्यामुत्तरत्रास्यपाठात्पूर्वत्र-
पदेनतस्याग्रहणात्त्रिपाद्याअसिद्धत्वं प्रतिसूत्रमुत्तर-
त्रासंत्वं धात्फलित स्त्रिपाद्यां पूर्वं प्रतितपरमसिद्धमि-
त्यर्थः एवमर्थेषु त्वं षुटिसिद्धं वाच्यमित्यादिवार्ति-
कानिप्रमाणानि फलंगोधुङ्मानित्यादिसिद्धिः। अन्य
था पूर्वं पूर्वं शास्त्रप्रवृत्तौ षत्वजश्त्वानुनासिकेषु सत्सु
झष्भावो न स्यादिति शब्दरत्नोक्तिः साविरुद्धेति पदा-
न्ते झष्भावस्यन्याय्यत्वात् तत्समाधानंजश्त्वापवाद-
त्वे ऽप्यनुनासिकत्वापवादत्वाभावात् षत्वकृते झष्भा-
वो न स्यात् अकृतेकृतेदुःस्थजश्त्वाप्राप्ताविव्यर्थंद्वसि-
पण्डितोक्तिः रसंवद्धाजश्त्वे कृते द्रुतिमूलाभावे जश्त्व
प्राप्ताविति व्याख्याया दुरापास्तत्वात् वस्तु तस्तुपौर्वाप-
र्य्याश्रयणविरोधेन पूर्वं पूर्वं प्रवृत्त्या षत्वं झष्भावजश्त्वा-
नुनासिकानां वृत्तौ नैवानिष्टं किंचित् किंतु षत्वे कृ-
ते भयद्गतिमतोर्मस्यवत्वापत्तिरेव शेखरोक्ता सुष्टु इ-
तिचिन्त्यंसुधीभिः अत्रयद्यपिलोकेऽनाहर्य्यज्ञानस्यैवप्र-
वर्त्तकत्वं दृष्टं तथापि शास्त्रप्रामाण्यादाहार्य्यारोपो-
पि शास्त्रप्रवृत्तावप्रवृत्तौचनियामकत्वमितिबोद्धव्यमि-
तिशेखरः लोकेऽ नाहार्य्येत्यादिनियामकद्भृत्यन्तमु-
क्त स्तस्यायंभावः यथाभूतले घटोऽस्तीत्यादौ भूतला-
धिकरणकघटत्वावच्छिन्नसत्ताऽत्यन्ताभावप्रतिबन्धिका ए-
वमेतत्त्रिपादीस्थं शास्त्रं सिद्धमेव तथापि त्रिपादीस्थ-

कार्यकर्मभवज्ञानप्रतिबन्धकम् एवं च पूर्वं शास्त्रं प्रति त्रिपादीस्थमसिद्धमित्यनुपपन्नमेवस्या इतोऽदर्शनरूपे लोपेऽभावारोपस्य रूपत्वेन मनोरथद्रूत्वादावदोषो ऽभावभावस्य प्रतियोगिस्वरूपत्वात् न चोत्वदृष्ट्यारोरित्यस्यासिद्धत्वमितिवाच्यम् दीर्घविधिसामर्थ्यादाश्रयासिद्धत्वात् अत्रसमाधानं कर्म्मधोरोमन्थ इत्यादिनिर्देशेनयत्रशास्त्रान्तरदृष्ट्याऽसिद्धत्वं नास्ति तत्रैवाश्रयासिद्धत्वं भवतु इश्चिचेत्येतन्मत, त्यापि रोरित्यस्यासिद्धमिति, नाश्रयासिद्धत्वमन्यद्विभावयन्तु पण्डिताः वस्तुतस्तु यौगपद्येन शास्त्रद्वयप्रसङ्गे शास्त्रासिद्धत्वप्रवृत्ते रोरीत्यस्याप्रवृत्त्याढ्लोपाभावेन रलोपशास्त्रस्यैवाप्रसङ्गः कार्य्यासिद्धत्वे रलोपे इश्चिचेत्यतः परत्वाल्लोपप्रसिद्दीर्घेऽपि इश्चिचेत्यन्तरङ्गप्रतिपदद्वयसापेक्षवहिरङ्गदीर्घस्य पूर्वं त्रासिद्धमिति रलोपस्यासिद्धत्वादुत्वमेव किन्तु कर्म्मधोरोमन्थ इत्यादिनिर्देशेनासिद्धवचनं किमर्थमादेशलक्षणप्रतिषेधार्थमुत्सर्गलक्षणभावार्थं चेति भाष्येणतत्त्वस्य कैय्यटविवरणाभ्यां शास्त्रासिद्धत्वस्यैवाश्रयणा इदोष इतिदिक् ॥ १०॥ स्त्रीप्रत्यये चानुपसर्जन इति अनुपसर्ज्जनेस्त्रीप्रत्यये तदादिनियमो न उपसर्जनेतु भवत्येव कारीषगन्धेरपत्यं स्त्री त्यर्थं तस्यापत्यमित्यणि अणिञोरनार्षयोरितिष्यङित्यणः ष्यङादेशे चापित्यरूपम् कारीषगन्ध्यायाः पतिः कारीषगन्धीपतिः परमकारीषगन्धीपतिः ष्यङः सम्प्रसारणं पुत्रपत्योस्तत्पुरुषे-

तिसम्प्रसारणंयथाऽवभवतितथापरमकारीषगन्ध्यायाः
पतिः परमकारीषगन्धीपतिरत्रापि भवतिस्त्रीप्रत्ययस्य
पतिंप्रत्युपसर्ज्जनत्वेऽपिपरमशब्दार्थंप्रत्यनुपसर्जनत्वा
त्कारीषगन्ध्याशब्दस्यापिष्यङन्तत्वात्कारीषगन्ध्याम
तिक्रान्ताऽतिकारीषगन्ध्येति विग्रहेऽतिक्रांतार्थंम्प्रति
स्त्रीप्रत्ययस्योपसर्जनत्वात्तदादिनियमसत्वादतिका-
रीषगन्ध्याशब्दस्यापि ष्यङन्तत्वा न्न संप्रसारणम् प-
चपरिडताः इयं परिभाषा न कर्त्तव्या ष्यङोऽनुपसर्जन-
स्यसम्प्रसारणमि त्यादिसूत्रकरणात् अवसमाधानं
परमाकारीषगन्ध्यायस्य स परमकारीषगंध्यः विना-
पिप्रत्ययंपूर्वोत्तरपदलोपोवक्तव्य इति परमपदस्यलोपे
कारीषगन्ध्यस्यपुत्रइतिविग्रहे कारीषगन्धीपुत्रइतीष्य-
तेस नस्यात् अतःपरिभाषयैववारणम् यद्यपि संज्ञास-
त्तायांविषयेपूर्वोत्तरपदलोपेसत्याभामाभामाभीमोभी-
मसेनइत्यादितदुदाहरणंतथापिस्तोः श्चुनेत्यत्रयोगः
संयोगः संपदस्य सत्याभामेत्यादावपिविनापीत्यतो-
लोपादितिशेखरविरोधादसंज्ञायामपि लोप इति व-
दंति एतच्च परिभाषावर्णनं तस्याः प्रयोजनान्तरं
नास्तीत्यभिमानेनैव वस्तुत स्त्वतिखट्वायेत्यत्राङ्गारणं
प्रत्युदाहरणं परमखट्वायैइत्यादौतत्रावनं परमकारी-
षगन्ध्याशब्दः प्रत्ययगृहणपरिभाषयाष्यङन्तो न भव-
ति परिभाषाश्रयणमनुपसर्जनत्वात्तदादिनियमेना-
त्रष्यङन्तमपि दृश्येति ध्वनितं भाष्ये एवं पदलोपोप्यत्र

चिन्त्यम् वहुपनोऽल्पधनद्रुतामादा वपिवद्दापत्तेः यगु
योगपदेसंपदलोपोदाहरणं तवतव युजेरेवसंयोगार्थ
करणे नादेयात् अतएवान्यवहितेश्चतुरसिद्धये स्तोश्चो-
श्चुरित्युक्तम् भाष्यसूत्रकारमतेऽपि स्पष्टप्रतिपत्तये सं
योगपदाध्याहारएवेत्युचितइतिदिक् ॥ १० ॥ वृजादे-
श्चगुरुमतोऽनृच्छः वृजादि.किम् वसौ गुरुमतःकिम् उ-
वोप अनृच्छः किम् आनर्छं नच ऋच्छत्यृतामिति
लिटि गुणविधानसामर्थ्यां दाम भविष्यति किमनेन
पर्युदासेनेति वाच्यम् गुणविधानसामर्थ्यं नामाव्यव
हितेऽपि तत्प्रवृत्तेरितिशेखरेसमाहितम् तत्राप्यकासू
वेऽनृच्छ इतिपदाभावे आनर्छत्यत्राम्प्राप्तः गुणोऽ
पिप्राप्तस्तस्य प्रतिपदोक्तत्वादपवादत्वाच्च गुणे कृते इ
जादित्वाभावादामः प्राप्तिरेवनेति व्यर्थमनृच्छपद म
वसमाधानम् विभावयन्तुसुधियइतिपण्डिता. शेखर
मतिभ्रम इत्थम् नच ऋच्छतिलिटिगुणविधानसामर्थ्यादेव
तत्सार्थक्यादितिसूत्रतात्पर्यादिति अनयापङ्क्त्या भा
ष्यसिद्धान्तोप्यागतइतिसूचित तथाहि ऊर्णेपेत्यादा
वाम्व्यावृत्तये उपदेशेगुरुमतोऽनृच्छइति उक्त्वा एवं त-
र्हि उच्छेराम्वक्तव्य. अनृच्छइतिज्ञापकादनौपदेशिक
स्यापि गुरुमत्त्वस्याश्रयमाणे उच्छाञ्चकारेत्यादावसि
द्धौ ऊर्णेपेत्यादावतिप्रसंगमाशक्योभयं न वक्तव्यमुप
देशग्रहण न करिष्यते तस्मान्नभवति ऊर्णेपेत्यादाव-
नाम्वा किमुक्तं सन्निपातविरोधादित्यनृच्छग्रहणंव्य

र्थमेवेति भाष्ये स्थिते पूर्वशेखरेऽन्तृच्छ इतिपर्युदा-समाश्रित्योचोगुरोरन्तृच्छ इत्येवसिद्धे रादियहणं-मतुब्ग्रहणं च स्पष्टार्थमित्युक्तम् इत्वादिगुरुमते-नैवान्तृच्छ इति पर्युदासः सार्थकोनान्यथेति तन्ना-वस्तदपि चिंत्यमेव संयोगेगुरुमत्त्ववतामेव यह-णापत्त्या ईङ्गतौ इत्यादीनामसंग्रहापत्तेः इचो-गुरोरिति सामर्थ्यान्नायं दोषोन्यथा ऋच्छ इत्येव ब्रूयादिति चेतावताप्यचोयदिगुरुमत्त्वस्याश्रयणे इडादेरसंग्रहः ऊंच्छादेरेव संग्रह इति दोषसत्ता-षात् वस्तुतस्तु गुर्विजादेरित्युक्त्येतरत्कर्त्तुमशक्य-मथवा गुर्वादेरित्येवास्तु दयायासश्चेत्यस्यानुग्रह-णादकारगुर्वादेश्चेत्त्याहादेरेवेतिनियमात्सिद्धेः न-वा सेरौपदेशिकाकारगुर्वादित्वेनैतद्विषयकनिय-मेयाल्यादिप्रभृतिभ्यामस्यादितिवाच्यम् लाघवेन-सामान्यनियमाश्रयणादितिदिक् ॥११॥ अतो-दीर्घोयञीति सार्वधातुके किम् केशवः अङ्गना केशाद्वोन्यतरस्यामितिवः अत्र केचित् सार्वधातु-कग्रहणं मास्तु सुपिचेति सूत्रनियमादेवादोषात् सार्वधातुकाभिन्ने यञादौ दीर्घश्चेत्तर्हि सुप्येवे-ति केशवशब्दादावपत्तेः समाधानन्तु राजभ्या-मित्यादावपि दीर्घापत्तिरिति अतोदीर्घस्य सु-ब्विधित्वाभावेन नलोपः सुप्स्वरेति नलोपासिध्य-भावात्सुप्तुतद्व्याप्यधर्माश्रयविधौ च सुब्विधि-

स्यादिति समाधानान्तरं तु तत्त्वप्रकाशिकायां
द्रष्टव्यम् ॥ ११ ॥ ज्योतिरायुषः स्तोमः समासेऽङ्गु-
लेः संग इत्यतस्समास इत्यनुवर्त्तते चाभ्यामुत्तर-
स्योत्तरपदावयवस्य च इत्यर्थः अत्र मूले समासे-
किम् ज्योतिषः स्तोम इत्युक्तम् तत्र इणकोरि-
त्यधिकारात् किन्तु ज्योतिस्तोमोऽस्त्रिब्राह्मणानाम-
मिति प्रत्युदाहर्त्तुमुचितमिति पण्डिताः केचित्तु
समासइत्यस्यनिवृत्तावप्यस्य पदविधित्वात्समर्थ-
परिभाषया समास एवास्य प्रवृत्तिरिति समास-
ग्रहणं चिन्त्यप्रयोजनमित्याहुस्तन्न पदाधिकार-
स्यापदान्तस्य मूर्धन्य इत्यत प्रागेव निवृत्त्ते भा-
ष्ये उक्तत्वात् वस्तुतस्तु मूलाशय इत्यग्रेऽभ्यः
॥ १२ ॥ नुम्विसर्जनीयशर्व्यवायेपीति यत्वस्य सा-
त्पदाद्योरिति निषेधस्यापवादोयं तेन नुम्विसर्ज-
नीयेति संबध्यते इति वाक्येऽपि प्रवृत्तिः नच प्र-
त्येकमितिव्याख्यानान्निंस्वइत्यत्रैवाचाप्यप्रवृत्तिरि-
ति वाच्यम् एवतर्हि समस्ताभ्येव भीरुष्ठामाग्नि-
ष्टुदग्निष्टोमज्योतिष्टोमादीत्यत्र समासेकिम् इ-
त्यनेन तदधिकारीयभीरो स्थानमित्यादिरिमू-
त्रीकिमर्थेति प्रश्नाशय असमासे प्रवृत्तिविरहा-
दपुरापाघांसिति तदुत्तरमित्यन्ये ॥ १३ ॥ रामा-
द्ग्रामादित्यत्र मूले णत्वं वावसान इत्युक्तम् पू-
र्वं षत्वासिद्धा णत्वमिति मनोरमा चापवादत्वा-

जश्त्वं बाधित्वा चर्त्वं ततो जश्त्वमिति शेखरः ज-
श्त्वाप्राप्तिविषये चर्त्वस्याचारितार्थ्यादपवादत्वसं-
गतेरिति शेखराशयः अस्योपरिदूषणान्तरं षड्श-
ब्दादौ पूर्वं षस्य ष एव चर्त्वं ततो जश्त्वं षस्य ष
एव श्रूयेत् जश्त्वादयः षडिति निर्देशेन ष-
स्य टकार एव नतु षकार इति परिहारेऽपि पू-
र्वापरविरोधः शेखरस्यास्त्येव उपानद्दित्यत्र चर्त्व
जश्त्वचर्त्वानिति तदुक्तेः किं च चतुर्णामित्यत्र-
चर्त्वं द्वित्वमिति प्रतीकमुपादाय ननु द्वित्वं चर्त्व-
मित्येव युक्तम् पूर्वत्रासिद्धमद्वित्वे इति वचना-
दिदं यर्णद्वित्वेऽपि प्रवर्त्तते वाक् वागितिभाष्यो
दाहरणात् अन्यथा द्वित्वदृष्ट्या चर्त्वस्यासिद्धत्वा-
दुगस्यैव द्वित्वं तस्य चर्त्वं पूर्वत्र गग्रहणापत्तेरि-
त्युक्तम् अस्मादपि पूर्वं जश्त्वं पश्चाद्द्वित्वमित्याया-
तीति पण्डिताः पदान्तविषये पूर्वं जश्त्वमिति
न्याय्यमेव वावसाने इत्यस्यापदान्तझलां चर्त्ववि-
धानेन चारितार्थ्यात् अत्र पदाधिकाराभावात्
अनुकरणंचानितिपरमिति ज्ञापकाद्नितिपर-
स्याप्यनुकरणस्य सत्त्वादवसाने त्यदाद्यनुकरणे त्य-
त् तत् इत्यादौ पर्व चर्त्वस्यापीष्टत्वात् नत्विद-
मयुक्तं नह्यनुकरणत्वभङ्गभिया शास्त्रस्य बाधयम-
त्कारतामुपैति पटत् इति इत्यादिषु अव्यक्तानु-
करणस्यात इताविति शास्त्रीयाणामप्रवृत्त्यापत्तेः ते-

षां वैयर्थ्यापत्तेश्चेत्यलं विस्तरेण ॥ १४ ॥ प्राचां ष्फस्तद्धितः गार्ग्यशब्दात्ष्फः आयनादेशे यस्येति चेति तद्धितनिमित्तकयकारलोपः तद्धितान्तत्वे प्रयोजनं प्रातिपदिकसंज्ञा च ष्फान्तस्य तेन षिद्गौरेति सिद्धश्च ङीषिति तत्र सत्र यद्योर्येव षित्वसामर्थ्यादप्रातिपदिकत्वेऽपि ङीषा च सिद्धिमाश्रित्य तद्धितग्रहणं प्रत्याख्यातम् गौकक्ष्यशब्दो गर्गादियञन्तस्तस्मात्क्रौड्यादिभ्यश्चेति क्रौड्यादिगौकक्ष्यशब्दात्ष्यङ् यतोयश्चेति चाप् गौकक्ष्या ततः ष्फप्रत्यये विवक्षिते तद्धितसंज्ञायां भस्याढे तद्धिते इति पुंवद्भावे चापोनिवृत्तिः ष्फप्रत्यये षित्वान्ङीष् गौकक्ष्यायणीति सिध्यति पुंवद्भावश्च तद्धितत्वस्यैव ष्फस्य संगच्छते पुंवद्भावाभावे यञन्तत्वविरहात्ष्फो न स्यादिति कश्चित्समाधानन्तु न युज्यते तथाहि गौकक्ष्यशब्दपाठस्य क्रौड्यादिषु भाष्ये प्रत्याख्यातत्वात् गौकक्ष्येति तु यावञश्चेति चापि सिध्यति सास्तु क्रौड्यादित्वात्ष्यङ् तथ गौकक्ष्यायणीति न सिद्ध्येच्चापः ष्फप्रत्ययस्यापवादत्वादिति वाच्यम् प्राचां ष्फ इत्यत्र सर्वत्रेति सूत्रात्सर्वत्रेत्यपकृष्य प्राचां सर्वत्र ष्फविधानात् गौकक्ष्येति तु दीर्घान्ते सेत्स्यति एवञ्च गौकक्ष्यापुत्र इत्यादौ ष्यङन्तत्वाभावेन ष्यङः सम्प्रसारणमित्यस्याप्राप्त्या

गौकक्ष्यायाः सम्प्रसारणप्रतिषेधो वक्तव्य इति वा-
र्त्तिकमनारम्भणीयमित्यपरमनुकूलम् किंच ष्फ-
प्रत्यये विवक्षिते भस्याढे तद्धित इत्यस्य प्रवृत्तिर-
नुचितैवायनादेशोत्तरमेव भसंज्ञायाः प्रवृत्तेः किं
च ष्फङन्ते यजन्तत्वविरहेण ष्फस्याप्रवृत्तेः किंच त-
द्धितयञ्ग्रहणमन्यतोऽपि विधानार्थं तेनासुरेरुपस-
ङ्ख्यानं नापूर्वमिति कैयटोऽप्येकदेशी यथाहि भा-
सुरेरुपसंख्यानमित्यस्याग्रे भाष्ये ष्फश्चेति वक्तव्य-
मासुरीय इत्युक्तं तत्र सिद्धान्तः कैयटः चासुरि-
णाप्रोक्त इति विग्रहेऽणिति अणि प्राप्ते छ एव
क्रियते लाघवादन्यथा हि रासुरीयग्रहणं कर्तव्यं
स्यादिति एतेनोपसंख्यानस्यावश्यकत्वे प्राप्तमि-
ति सूत्रस्य भाष्यं तद्धितयञ्ग्रहणप्रत्याख्यानमेवाद्रि-
येत इति तत्त्वप्रकाशिकायां द्रष्टव्यम् ॥ १५ ॥
टिड्ढेत्यत्र वार्तिकम् नञ् स्नञ् ईकक् ख्युं-
स्तरुणतलुनानामुपसंख्यानमिति तेन ङीपि च-
न्तानुदात्ताविमौ गौरादिङीषि तु चान्तोदात्तावि-
ति ग्रन्थकाराः तत्र पण्डिताः वार्तिके गौरादौ
चानयोः पाठो मास्तु बह्वादिष्वेवानयोरस्तु पा-
ठस्तत्र पाठाङ्ङीष् सिद्धः पक्षे वयस्यचरम इति
ङीबिति स्वरद्वयसिद्धिरिति समाधानं विभावय-
न्तु सुधिय इति चेदं तत्त्वं तरुणतलुनशब्दौ
चोरवत इति उरन् प्रत्ययान्तौ यौगिकौ तरति .

प्रथमं वयस्तरति दुःखमिति वा यदाह दुःखतर-
णकं औणादि. तदापि ङीप्सिद्धये गौरादिपाठ
आवश्यको नेह वयस्यचरम इति प्राप्तेति एत-
च वयस्यचरमइति ब्रुवता तरुणतलुनयोरुपसं
ख्यान कुर्वता वार्त्तिककारेण सूचितम् सूत्रकार-
मतेन प्रथमवयोवाचिन एव यतः तरुणतलुनयो
रग्रहणमेव सर्वथेति गौरादिपाठस्तयोरिति बोध्य-
म् मध्याह्ने तरुणोरविरित्यादौ प्रचण्डो रवि-
रित्याद्यर्थसावश्यक तरुणशब्द. प्रौढपर्यायोपि च-
य तदर्थको यदा तरुणशब्दः प्रयुज्यतेऽथवा तरु-
णतात्पर्येण वृद्धेपि प्रयुज्यतेऽथवा प्रौढ्यार्थको वा
गृह्यते तत्तात्पर्येणोपसङ्ख्यानमिति ॥१६॥ घेर्ङि-
ति पञ्चाङ्गस सुपीति चानुवर्तते पञ्च पण्डिताः
घेर्ङीत्येवास्तु यस्मिन्विधिरिति परिभाषया तदा-
दिविधौ ङादौ सुपीत्यर्थेन सिद्धेरित्यहणं व्यर्थं प्रा-
योगिकङादेरसम्भवादानुपदेशिकङादित्व गृह्य-
ते । प्रवाहुशब्दात्सतीयैकवचनस्थाने चाङयाव-
देत्याङादेशस्तुङादेश एवास्तु प्रवाह्वेत्यादिसि-
द्धये मत्यामित्यादौ तु ङेरामादेशे तस्य ङादित्वा-
भावादाण्न्द्या इति न प्रवर्तेत ङितिकरणे तु च-
नुबन्धकार्यत्वादनल्विधावपि स्थानिवत्त्वाज्जायते
यद्यपि तथाऽपि ङेरामित्यत्र ङेर्डामिति उक्ते न
कश्चिद्दोष इति प्रश्नः पञ्चान्तरङ्गानामादेशे कृते त-

शक्तिसंज्ञाऽऽबृया इत्याट्च प्राप्तौ तथाडागमस्याहत्वाद्बार्थपरिभाषयान्तरङ्गाया घपोरसंज्ञाया बाधेडकारश्रवणापत्तिराडागमस्य नित्यत्वमपि इति केचित्समाधत्ते ॥ वस्तुतस्तु इत्थत्वं स्पष्टार्थं चाप्नद्या इत्यादौ सेनान्यामित्यादौ ङामादेशश्रवणार्थं इति नद्यावन्ते परत्वान्ङामादेशे सकृद्गतिन्यायादाडागमाप्रवृत्तेर्यणारूपसिद्धेः न चाडागमाभावे नुटस्यादिति वाच्यम् निरनुबन्धपरिभाषया चाम् ग्रहणे नङ्मोऽग्रहणादत एव सानुबन्धो ङामादेशश्रवणार्थः नचैवं रीत्या नुटो ऽभावेऽपि चाट् इव याट्स्याटोरप्यप्रवृत्तिस्स्यादिति वाच्यम् लक्ष्यव्यवस्थापका।वेतौ न्यायौ पुनः प्रसङ्गेतिसकृद्गताविति-वचनच्यानुरोधाद्याट्स्याटोर्विषये पुनः प्रसङ्गाद्याट्स्याटावित्यदोषात् कथमन्यथाऽटिकृते ऽपि यदागमन्यायात्पराद्विवत्स्वाद्याऽऽमत्वेन प्राप्तस्य नुटोवारणं भाष्योक्तं संगच्छेत् चागमादेशे परत्वात्कृते पुनः प्रसंगाद्याट् तस्मिन्कृते सकृद्गतिन्यायान्नुटोऽभाव इति भाष्यमते यथासिद्धिरिष्टस्य तथाऽत्रपक्षे ङामि कृते सकृद्गत्याऽऽटोभावः पुनः प्रसंगाश्रयेण याट्स्याटोः प्रवृत्तिरेव न भेदो रूपसिद्धिरुभयत्रैव अथवा भसत्वाट् ङ्योरसंज्ञा तु लशक्वतद्धितेत्युपदेशे ऽजित्यत

मुहरस्यासेरस्यति प्रत्ययस्योपदेशे आदिभूतं यञम-
कु तस्येत्संज्ञेति व्याख्यानात् एतच्च चुटू इति सूत्रे
भाष्ये ध्वनितं तथाहि चुञ्चुप्चणपोश्चकारप्रति-
षेध इतिवार्त्तिकप्रत्याख्यानाय भाष्ये उक्तम् च-
कारादि चुञ्चुप्चणपौ किं चकारो न श्रूयते चु-
रिति निर्दिष्टो चकार इति अत्र चकारे लुप्तेऽपि प्र-
त्ययादित्व इतीत्संज्ञाप्राप्त्योपदेशे आदिचका-
रोनास्तीति तात्पर्य्यं फलम् कल्प्यम् सामर्थ्यक-
ल्पनाया अनौचित्यादेवञ्च लशक्वतद्धिते सूत्रेऽपि
साहचर्य्येणोपदेशपदानुवृत्त्याऽऽदौ इति तत्त्वप्र-
काशिकायां द्रष्टव्यम् ॥ १७ ॥ अनेकाल्शित्सर्व-
स्य अत्र शेखरः नानेकाल्शिदिति तु नोक्तम् त-
द्युक्तम् अनन्तरत्वादादेः परस्येत्यस्यैव निषेधे
हि ङिदनेकाल्शलोऽन्त्यस्येत्येवान्त्यस्य सिद्धेर्ङि-
च्चेति व्यर्थमपि स्यात्तानन्तर्यन्यायो न प्रवर्त्तते अत्र
समाधानं कुर्वन्तु सुधिय इति अत्र पण्डिताः य-
द्यप्येतत्कौस्तुभेऽप्युक्तम् अन्त्यस्यादेरिति आनुप-
र्व्यानेकाल्शिद्बाधनयोर्नेति ङिदनेकालोऽन्त्या-
र्थं ङिच्चेत्यारब्धव्यमिति तथापि युक्तं शेखराश-
यः ङिच्चेत्यारम्भात्पदं बाधेऽकि भाष्यदलाघवाद्या-
ख्यासमुचितमिति ॥ १८ ॥ अदर्शनंलोपः अत्र
षष्ठीस्थानइत्यनुवर्त्तते तेन षष्ठ्यन्तस्य स्थाने य-
ददर्शनं तल्लोपसञ्ज्ञ इत्यर्थः तेन अपु इत्यत्र क्वि-

पोऽप्रसंगात्तददर्शनस्य लोपसंज्ञाऽभावाद्भस्तस्य-
पितौति तुक् न भवतीत्याह प्रसक्तस्येति तदुक्तं
शेखरे तस्मात् नपु इत्यत्र क्विपोऽदर्शनस्य सत्त्वे-
न न प्रत्ययलक्षणेन तुगापत्तिर्दोष इति न चा-
यंशेखरग्रन्थः स्थानिवत्सूत्रस्थभाष्यविरुद्धस्तथाहि
भाष्ये शब्दस्य नित्यत्वाद्बुद्धेरेव स्थानितादेशताचे-
ति पक्षे सेनानीरित्यादौ कर्म्मण्यण् वृद्धिः किंम्बु-
द्धिरिति स्थानिवत्वेन वृद्धिः प्राप्नोतीत्याशंक्य षष्ठी-
निर्दिष्टस्य स्थाने यथादेशस्तस्यैव स्थानिवदिति
समाहितं प्रकृते क्विपः प्रातिपदिके प्रत्ययलक्ष-
णेन तुगापत्तिः प्रत्ययलक्षणसूत्रेणापि स्थानिव-
द्भाव एवानूद्यत इति चेन्न नपुइत्यत्र दोषाभावे-
नैवाच भाष्ये ग्रामणीरित्यत्राण्प्रसंगे प्राप्ते क्वि-
प्प्रसंगे वृद्धेरेव स्थानिवद्भावाद्वृद्धिमाशंक्य योऽ-
त्राण्प्रसंगः क्विपाऽसौबाध्यते इत्युक्तम् सरसूक्षिये-
ति क्विपोविधानादणोऽत्राप्रसक्त इति कैयटः त-
स्मान्नाप्यात्पष्ठीनिर्दिष्टस्य स्थानिवद्भावोवाधित ए-
व नपुइत्यत्र तु अणइव क्विपः प्रसंगोनास्तीति
तत्र प्रत्ययलक्षणप्रदर्शनमेकदेशिन इति तत्त्वम्
ग्रामेतिष्ठतीत्यत्र स्यबंतार्थनिरूपितार्थाधिकरण-
त्वाभाववत्तिबन्तार्थनिरूपितधात्वर्थक्रियायाः प्र-
कृत्यर्थत्वाभावाच्च प्रकृते षष्ठीस्थानेइत्यस्य भाष्ये
ऽनुवर्त्तितत्वाच्च वस्तुतस्तु स्थानिवत्सूत्रोक्तषष्ठी-

निर्दिष्टस्यादेशः स्थानिवदिति भाष्येणैवगतार्थता प्रकृतसूत्रे षष्ठीस्थानरूपस्यानुवृत्तिप्रदर्शनं भाष्ये स्पष्टार्थमेवेति यत्तु अदर्शनमिदित्येवास्तु अदर्शनम्येरसंज्ञा तस्यलोपइति न कर्त्तव्यमुपदेशेऽजित्यादिसूत्रैरदर्शनस्यैव विधानादिति तन्न कृत्रिमाकृत्रिमयोःकृत्रिमस्यैवग्रहणे भूआमित् तिष्ठतेरित्प्रत्ययः स्यादित्यादिप्रवृत्तदिनादर्शनप्रतीत्यापत्त्या लक्ष्यासिद्धेः तपरसूत्रस्य कृदित्यादिविपर्यस्याभ्रकमौलिडन्यन्यायेनैत्यदर्शनबोधिकासञ्ज्ञा स्यान्नतु तत्कालबोधिकेति संज्ञयोर्विरोधाच्च समावेशासम्भवः इदित्येकमात्राकालिकेकाररूपस्य भावस्य दर्शनरूपत्वाभावात् तपरसूत्रेणास्यास्संज्ञायाः बाधेऽस्यानिर्विषयत्तापत्त्योपदेशेऽजित्यादीनांस्वरूपमात्रबोधकतापत्तिः स्यात् इदितोनुमित्यस्य व्यर्थः स्यात् इदिकारोऽदर्शनं यस्य सामर्थ्यात् यस्येकारोनास्ति भनप्रभृतेस्तस्यैव नुम्स्यात् चितिप्रभृतेरिकारवतोनस्यात् यथाऽपि कथं चिदन्तेदितइतिव्याख्यानात्स्यामृआमिदित्यादिप्वतपरनिर्देशेन निर्वाहे [illegible] अदर्शनमिदिति सुवचमेव ॥१८॥ छिस्त्रियतुरितिकृत्वोर्थे अत्र शेखरः दसुसोरिति घत्तरसूत्ररीत्या सुचइतिसूचयितुमुचितम् सुजन्तस्य पदस्थैरयर्थादिति अत्र दूषणं चतुष्कारोतीत्यनेदुदुपधस्येति

नित्यत्वापत्तिः सूत्र इत्यस्यासिद्धत्वात् अप्रवृत्तेः सिद्धान्ते तु चतुर्ग्रहणसामर्थ्यान्नासिद्धत्वमित्यदोष इति अत्र समाधानमिदुदुपधस्येत्यत्रापि सम्बन्धापत्तेः भाष्ये तु इदुदुपधस्येत्यनुवर्त्य ह्रस्वोऽर्हत्येव सुवचमिति स्थितम् तदुपपत्तिस्तु सुपद्मरयेव सिद्धे गुरुभूतनिर्देशादत्रासिद्धत्वमिति चतुष्करोतीत्यत्राटौविकल्पः संपन्न इति तत्त्वप्रकाशिकायां द्रष्टव्यम्॥२०॥ इकोगुणवृद्धी सूत्रप्रयोजनम्वासिकमित्यहणमात्सन्ध्यक्षरव्यञ्जननिवृत्त्यर्थमिति कैयटः अकारस्याकारेरूपे विशेषोभावात्तौत्युक्तमिति अत्र केचिद्विशेषं दर्शयति अकारस्याकारे गुणे कृते पेचियेत्यत्र नशसदद्वादिगुणानामिति निषेधादेत्वाभ्यासलोपौन स्यात् वस्तुतस्तु विशेषोनास्त्येव धत्विचसिटीत्वारम्भसामर्थ्यान्न विशेष इति पेचियेत्यत्रैव ववरियससरियेत्यादावपि निषेधानापत्तिः नशसददेतिसूत्रे गुणग्रहणस्य तु न वैयर्थ्यम् पपरतुः पपरुरित्यादाहृच्छत्यृतामितिगुणे कृते एत्वाभ्यासलोपनिवृत्त्यर्थारितार्थ्यात् अत्र केचिदित्थं समाधानं कुर्वन्ति केवलदीर्घस्थानिकगुणविषये नशसेत्यस्सावकाशत्वे इति गुणग्रहणम् अपहायतत्स्थाने इग्ग्रहणमेव कृत्यहणमाकुर्यात् सामान्येन गुणग्रहणसामर्थ्याद्विजातीयस्थानिकविजातीयगुणस्यैव

ग्रहणाद्दात विजातीयस्थानिकविजातीयगुणस्या-
भावादिति कैयटग्रन्थेन क्वाप्यनुपपत्तिः अथवा श-
लिचसेटीति सूत्रस्थभाष्यरीत्या नशसदद्देत्यत्र गु-
णग्रहणं गुणावयवपरं गुणावयवोयोऽकारस्तस्य
निषेधस्तत्र लुनविथेत्यचैव सम्भवतीत्यदोष इति
पण्डिताः वस्तुतस्तु अकारान्तधातोरेवाकारस्या-
कारे गुणे कृते न विशेषतीतिकैयटाशयः अका-
रोपधग्रहणं तु अर्थोऽत्यस्येति हलएव गुणः ना
चः इक्परिभाषाया अभावात् अथ युक्तिमन्तः
लघ्वीउपधा पुगन्तस्य लघूपधाचानयोः समाहारः
पुगन्तलघूपधमिति समासमाश्रित्य व्यधिकरणा-
न्वयादङ्गावयवलघूपधाया गुण इति व्याख्यान-
मालम्ब्य पिपिथेत्यादौ विशेषोक्तिसम्भवत्वोपि न
युक्तः वार्त्तिकप्रयोजनम् प्रत्याख्यान एवास्य प्र-
कारस्य भाष्ये उक्तत्वात् किंच अयं प्रकारोन
वार्त्तिकसम्मतोऽन्यथा क्वारसंध्यसरेत्यादेव ब्रूया-
त् सम्ध्यसरेति न ब्रूयात् पुगंतस्याङ्गस्य गुणो ल-
घूपधस्याङ्गस्य गुण इति सामानाधिकरण्येनान्व-
ये ऽलोंऽत्यपरिभाषोपस्थितिपक्ष एव वार्त्तिके भा
दित्युक्तिसङ्गच्छते पुगन्तलघूपधस्येति सूत्रं तु उ-
पधावतोऽगस्य चेत्तर्हि लघूपधस्येति नियमार्थं-
स्यात्तेनैंहितोहितीत्यादौ गुणः गोपयतीत्यादौ नि
यमबाधेन गुणएवेति तदपि न व्यपदेशिवद्भावेन

सत्त्वात् ॥ २१ ॥ क्ङितिप्रतिषेधे तन्निमित्तग्रहणं कर्त्तव्यं किम्प्रयोजनम् उपधारोरवौत्यर्थं नवक्तव्यं ज्ञापकात् प्रतिषेधोभविष्यति यदयमिकोझल्हलन्ताच्चेति सनः कित्त्वं शास्ति तज्ज्ञापयत्याचार्य्योभवत्युपधानुपधा वा तस्यापि निषेध इति ग्रन्थः अत्र केचित् हलन्ताच्चेतिसूत्रस्य न वैयर्थ्यं हलन्तनिसन्यङोरिति द्वित्वे ऽचलोपोऽभ्यासस्येत्यभ्यासलोपे दम्भइच्चेति हलन्ताच्चेति सनः कित्त्वे धिप्सतीत्यत्रानिदितामिति नलोपाद्यस्यात् कित्त्वस्य दम्भइच्चेत्येव सिद्धेर्हलन्ताच्चेति सामान्यस्यारम्भात् समाधानन्तु क्वचिद्दशोभीत्यमकिति सनीकोझलदम्भेरिति लघुनोपायेन सिद्धे हलन्ताच्चेति ज्ञापकमेवेति पण्डिताः वस्तुतस्तु दम्भेरित्युक्ते सनिमीमाघुरभलभशकपतपदामच इस्मितिमीमादीनांनित्यादेशे मित्सति दित्सतीत्यादौ गुणाभावार्थं हलन्ताच्चेति सनः कित्त्वार्थमावश्यकं तथा सनीवन्तर्धतीडागमाभावे दिधूर्षतीत्यादिसूत्रारम्भे एव सिध्यति ज्ञापकपरभाष्यस्य त्वयमाशयः प्रतिलक्ष्यं लक्षणभेदः यद्यपि नलोपागमाभावयोश्चरितार्थौविधिस्तथा प्युपधागुणनिषेधार्थौहलन्ताच्चेत्यचरितार्थ इति ज्ञापकत्वं तस्येति ॥ २२ ॥ नलोपः प्रातिपदिकान्तस्य अन्तग्रहणमत्र ज्ञापकम् पदस्येत्यधिकारः सत्कचि-

स्थानषष्ठी क्वचिदवयवषष्ठी तेन मादुपधायाश्च मतोर्वो इत्यत्रावयवषष्ठीत्वे यद्यावयवमतोर्मस्य च इत्यर्थे हन्वन्तावित्यादौ वत्वसिद्धिरन्यथा हन्वानित्यत्रैव स्यान्नतु हन्वन्तावित्यत्रेति शेखरे स्थितम् वस्तुतस्तु व्याख्यानादेतल्लभ्यमन्तग्रहणं स्पष्टार्थमिति यदस्येत्यत्र भाष्ये ध्वनितं तत्र चि न लोपे प्रत्याख्यायते स्थानेषष्ठी चन्तग्रहणाद्दा नलोपे इत्युताम् आववादद्याख्यानेनैव षष्ठ्यर्थनिर्णये षष्ठीस्थाने इति योगोऽन्तग्रहणं च न कार्यमिति भाष्याशयः ॥ २३ ॥ तस्माच्छसोनः पुंसि ननु शसोनुम्पुंसि इत्येवसूत्रमस्तु षष्ठः सवर्णं इत्यतोऽकइत्यनुवर्त्याकः परस्य शसोनुम्स्यादित्यर्थः परत्वान्नुमि पश्चात्प्रथमयोरिति पूर्वसवर्णदीर्घे संयोगान्तलोपे सिद्धं रामानित्यादिकिञ्च इत्याद्यावकः परेण शस् एतान् गाःपश्येत्यत्रापि श्रोतोऽम्शसोरित्येकादेश आकारे कृते शस्परत्वाभाव इतिदोषाभाव इतिचेन्न विश्वप इ इत्याद्यावातोधातोरित्यालोपे पूर्वस्मादपिविधावः परस्मिन्निति स्थानिवद्भावे ऽकःपरः शस् इति नुमापत्तेः पञ्चमीसमासप्रत्याख्यानपक्षे तु न दोषः षष्ठाविरपश्चैत्रादेशे भात्वे कृते नुमस्यादिति वाच्यम् नकारस्यात्वं परनिमित्त बहिरङ्गमन्तरङ्गे नुमि कर्तव्ये तस्यासिद्धत्वादकः परत्वाभावात्

अथ वा ओमाङोः क्रियते प्रियतिस्र इत्यादौ त्वचिरेण वाधः अत्र समाधानं कुर्वन्तु सुधिय इति पण्डिताः अथेदं समाधानं रामानित्यत्र पूर्वसवर्णं इति दीर्घे नित्यत्वात्कृते पश्चात्सकारस्य नुमापत्तिः मित्त्वसामर्थ्यात्पूर्वं नुम् चेत्कार्यंकालपक्षे ऽन्तरङ्गे ऽट्कुप्वाङिति णत्वे कर्तव्ये संयोगान्तलोपस्यासिद्धत्वापत्तिः अत्र पक्षेऽसिद्धत्वाश्रयणे तस्मादित्येव लिङ्गम् अथ मित्त्वसामर्थ्यं तुटि कर्त्तव्ये नुम्करणसामर्थ्यादित्यर्थोनकारस्यादेशे कर्तव्ये तत्सामर्थ्यादिति वाच्यम् सत्यायुक्तः पुंसि गा इत्यत्र नुमोनकारादेशस्य चारितार्थ्यात् शसः शकारस्योरत्परसूत्रस्थभाष्यरीत्या शसः परपरत्वाच्चस इत्यस्यावयवषष्ठी प्राप्ति र्वीध्या किञ्च मित्त्वसामर्थ्यादकः शसोऽपि परे नुम्स्यादित्यर्थे ऽकएव नुमापत्तौ रूपासिद्धिः तस्मादिति कृते तु न दोषः शसोऽचोऽसम्भवादचीति न सम्बध्यते तस्मादित्युत्तरस्येत्यस्य प्रत्याऽचोनुमित्यर्थे दोष इति चेत्तर्हि रामानित्यादौ णत्वदोषस्य वारणं निर्देशाश्रयणे प्रतिपत्तिक्लेश इति सूचकाशयः शसोनः पुंसीत्यपि न युक्तम् अकः शसवयवे ऽचि पूर्वपरयोरचि नत्वादेशापत्तेः एकः पूर्वपरयोरित्यधिकारे पञ्चमीसप्तमी च नैकस्यानित्यत्वबोधिकेति सिद्धान्तात् अचीति निवृत्तौ

तु तव प्रमाणन्नास्ति भाष्ये तस्मात्किं एतान् गा इति न्यासान्तरे दोषान्तरोपलब्धमिति मम दोषो न यत्तु औशादेश इत्युक्तम् तन्न औ इत्युक्ते सर्वादेशे सिद्धे शित्त्वं व्यर्थम् अथ औशादेशस्तर्हि संहितायामष्टाभ्यो औरित्युक्ते गौरवमसंहितायामष्टाभ्यः औ इति गौरव मेव औशिकर्तव्ये जश्शसोरनुमीयमानं यद्यपि बहिरङ्ग तथापि नुमागमएव बहिरङ्गोऽर्थस्य पुंस्त्वस्याधिक्येनापेक्ष्यत्वात् अर्थकृतबहिरङ्गत्वं नास्तीति तत्त्वप्रकाशिकायां दूषितमेव किञ्च नुमि कृते श्वानगौरवमुकारमकारयोरित्संज्ञा कर्तव्या मिदच इत्यस्योपस्थित्या ऽचःपरत्व बोधनीय सयोगान्तलोपे पदसयोगसज्ञा अपघाती इति पाणिनेरनियोक्ता न इष्यत इति युज्यताम् यदि तस्मादित्यस्य प्रत्याख्याने ऽतिभायस्तर्हि शसोन. पुंसि इत्यचाकोदीर्घ इति पूर्वसवर्णइति चानुवर्त्य पञ्चम्याविपरिणम्याक. पूर्वसवर्णदीर्घात्परस्येति व्याख्यायता किमनेन तस्मादित्यनेनेति तत्त्वप्रकाशिकायां स्पष्टम् ॥ ३२ ॥ हलड्याब्भ्योदीर्घात्सुतिसीति अत्र मनोरमायां हल्ङ्यापस्योरित्येव सूचयितुमुचितम् तत्र शब्दरत्ने सु इट तिस्योरुपलक्षणमन्यथा विभाराज्यमिति न सिध्येत् अधिभर स इति स्थिते रुत्वासिद्धासयोगान्त लोपे-

रोरीति लोपे संयोगान्तलोपस्य पूर्वत्रासिद्धत्वात् ढ्लोप इति दीर्घो न स्यादिति चेयं ग्रन्थः शे-खर विरुद्धश्च हि चजर्घाद्रतिभाष्यप्रयोगात्पूर्व-त्रासिद्धमित्यत्र पूर्वपदे नलोपसुब्रञ्लायष्टयोधना-दित्युक्तम् चत्वेत्यं विरोधपरिहारः भाष्यप्रयोगेण साधुत्वस्यासति पक्षे स्वीकारादितिप्रकृते तु ति-स्रोर्विन्यत्व स्थिते तत एव साधुत्व न भाष्यप्र-योगेण साधुत्वस्यास्य सति पक्षे स्वीकारात् ना-सूयाकर्तव्या पत्रानुगमः क्रियतइति पंक्तिविंश-तीतिसूत्रस्य भाष्यादिति परिगणिताः वस्तुतस्तु शेखरोक्तः सत्यमेव पितृराज्यमित्यत्र सूत्रकारसि-द्धान्ते ऽपि संयोगान्तलोपस्यासिद्धत्वाद्दीर्घोन प्र-प्नोतीति रोरीतिलोपस्याश्रयासिद्धत्वेऽपि संयो-गान्तलोपस्यासिद्धत्वेनोक्तभाष्यप्रयोगेणैव यद्वा न सुन इत्यत्र नने इत्येवकर्तव्ये सुग्रहणं योगविभा-गार्थं नेति सुने ति क्वचिदसिद्धत्वन्नेति व्याख्या-य प्रयोगार्थो निश्चित्य नातिप्रसंगः आश्रययोग-विभागार्थं नेतिसुनेति तदा सिद्धार्थत्वात् चतएव प्रत्ययः पर इति रेफस्य लोपः विसर्गः चजर्घा इति भाष्यस्याश्रयासिद्धत्वे व्युत्पत्तिरस्ति अ-थवा सत्यमप्यचैव तात्पर्यं तस्य दोषः संयोगा-दि इत्यादिवार्तिकानियोगविभागसिद्धानीति तत्त्वम् ॥ २४ ॥ वट्व्रजहलन्तस्याचः हलन्ताच्छ-

त्येव सिद्धं वदव्रज्योर्ग्रहणं अतोहलादेरिति वैक-
ल्पिकदीर्घबाधनार्थं ननु वदव्रज्योरच् इत्येवास्तु
अज्ग्रहणसामर्थ्यादिगन्तस्याच् इत्यर्थो भविष्यति
वदिव्रज्योरवयवस्याच् इति नार्थः अतोहलन्तस्ये-
त्यतोऽत इत्यनुवृत्त्यैव सिद्धे तस्य वैयर्थ्यात् अन-
न्तार्थत्वन्तु नास्ति सिचिवृद्धिः परस्मैपदेष्वित्येव-
सिद्धेः अनिगन्तार्थमिदमित्यपि न अचिकीर्षदि-
त्यत्र ह्यल्लोपाविति वचनादतोलोपविधानात् अ-
पासीदित्यत्र वृद्धौ नास्ति विशेषः अजन्तानामि-
त्यनेन सिद्धासम्भवात् तदेतदाहुः भाष्यकाराः ए-
वन्तर्हि इदमेव हल्ग्रहणमनुवृत्तं हल्ग्रहणमनेका-
र्थम् अज्ग्रहणमनिगर्थमिति अभांक्षीदरांक्षीदि-
त्यादिसिद्धये चान्तार्थग्रहणेऽपि सिध्यर्थमित्यर्थः
अन्यथा अवासीदित्यादावव्यतिप्रसङ्गः स्यात् त-
दुक्तं भाष्ये सिद्धाति व्यवाये तु न भवति यदि सि-
चानन्तर्यं विशेष्यत इति ॥ अचानिगर्थमिति भा-
ष्यस्यायमर्थः अग्रहणाभाव इक्परिभाषोपस्थाने
अभैत्सीदित्यादावेव स्यान्नतु अभांक्षीदित्यादावि-
ति अन्तग्रहणन्तु स्पष्टार्थमन्यथा हलोऽच् इत्युच्य-
माने अजन्ताङ्गस्य हलः स्थाने वृद्धिः स्यादि-
त्यसम्बन्धार्थाशंक्यत इति कैयटे स्पष्टार्थम् अचैव
विचारोऽनुचितश्शेखरे स्पष्टत्वात् ॥ २५ ॥

नपदान्ताट्टोरनाम् विशेष्यविशेषणभावादेवा-

न्तपदे लाभे स्पष्टार्थं तदिति शेखरः पदान्तादिति-सूत्रे शेखरे चन्तग्रहणं पदान्तकार्य्यार्थं अन्यथा पदविधित्वापत्त्या समर्थपरिभाषोपस्थितेरसमर्थे तिष्ठति कुमारी छत्रं हरदेवदत्तइत्यादौ न स्या-दित्युक्तम् तस्यायं भावः न पदान्तादित्यत्र तु न समर्थपरिभाषोपस्थितिः पञ्चमीत्यत्र तदुपस्थित्यै-व न पदान्तादित्यस्यानुपस्थित्यानामित्यस्य वै-यर्थ्यापत्तेः समर्थपरिभाषां प्रति विपादीस्थएव न पदान्तादित्यस्यासिद्धत्वा न्न तस्या अत्रोपस्थि तिरिति न पूर्वापरविरोधश्शेखरस्येति पण्डिताः न पदान्तादित्यत्र येनविधिरित्यस्यानित्यत्वबो-धनार्थं मन्तग्रहणम् तेन समासप्रत्ययविधौ प्रति-प्रतिषेध इत्यादिवार्तिकसूत्रकारेणापि बोधनमि-ति नापूर्व्वम् किञ्च तिङ्ङतिङ इत्यत्रातिङग्र-हणतिभवति इत्यादौ मा भूदिति कृतम् तत्र तु समर्थ इत्येव सिद्धं तत्रैकार्थीभाव एव सामर्थ्य-मित्यतिङितिज्ञापकात्पदकार्य्येऽपि क्वचिदसम-र्थपरिभाषानुपस्थित्यैव तुकि सिद्धे पदान्तादि-त्यन्तग्रहणमपि स्पष्टार्थम् किञ्च विशेष्यविशेषण भावे कामचारस्यापिबोधनार्थं मन्तग्रहणं तेनोत-श्चप्रत्ययादसंयोगपूर्वात् उदोष्ठापूर्वस्येत्यत्रोकार-योः सयोगपूर्वः ऋकारोष ओष्ठापूर्वं इत्यादिव्या-ख्यातं भाष्ये सङ्गच्छते अन्यथोकारान्तस्यासंयो-

गपूर्वत्वग्रहणे चकारान्तस्यौष्ठ्यपूर्वत्वग्रहणे वा दाग्नु हि इत्यत्र हेलुंक् स्यादुकारान्तप्रत्ययस्यासंयोगपूर्वत्वादुकारोऽथोऽसंयोगपूर्व इति व्याख्याने न दोषः एवं संकीर्ण इत्यत्र धातुर्वकारस्तस्य चोष्ठ्यपूर्वइत्यर्थे यथैव स्यान्नापि पूर्वं इत्यत्र स्यादिति येनेरयच भाष्ये स्पष्टम् ॥ ३६ ॥ ङसिङसोश्च चङिदसीत्येवसिद्धे ङस्ग्रहणं स्पष्टार्थमिति पण्डिताः ङिदस इत्युक्तेः प्रत्ययग्रहणानाचया पदान्तादित्यस्य सम्बन्धे हरेस्त्यादौ न स्यात् नियमात्पदान्तादेङोऽति पूर्वरूपं चेग्ङिदसोऽकारस्यैवेति पुंसोऽसुङिति चसुङित्येकादेशस्यासोनुकरणादित्काक्यपि चरयतीतिभवति तस्य देवदत्तोऽस्तीत्यादावेव प्रसक्तिः स्यात्प्रकृतिवदनुकरणमित्यतिदेशे नङिदसः सम्भवात् चजह्रत्स्वार्थपक्षे प्रक्रियादशायां कल्पिते नास्यासोऽर्थवत्वाच्च चतएव नमस्कात्यत्र नमः पदस्यार्थवत्त्वंमोपपदविभक्तिरित्यनेन द्वितीयावारणं न त्वर्थवत्परिभाषया नमसोऽनर्थकत्वे गतिसंज्ञाविरहान्नमस्पुरसोरिति सत्वस्यैवानापत्तिः चनिनस्मन्ग्रहणेऽनर्थकस्यापि ग्रहणाच्च प्रत्ययाप्रत्यययोरिति प्रत्ययङिदसोग्रहणन्तु न सापरिभाषैव नास्ति कथमन्यथाचार्य्योङसोग्रहणं कुर्य्यात् ङसिङेत्यपि न युक्तम् ङसच सयेति द्वंद्वेप्रत्येका

घ्यप्रामाण्येनाचाकचोऽनभिधानमेवेति पण्डिताः वस्तुतस्तु समः समौति सूत्रे ऽकचोऽभिधानकथनं भाष्यप्रामाण्येन नोपलभ्यामहे किन्तु इद मोऽण्यादेशे ऽवनुदात्त इति सूत्रे भाष्ये विचित्रास्तद्धितवृत्तय इत्ययाच् न ज्ञायत इत्युक्तम् तद्भाष्यप्रामाण्येनाचाकचोऽभावे सिद्धिरयुक्ते कृपाविशेषोक्तिः शेखरस्य युक्तैव किंच सम्यगर्थसशब्दे कुत्सासम्भवोऽपि नास्ति सूत्रकारेण तु समिय इयं विष्वगदेवयोरित्यतष्टेरित्यनुवृत्तिर्माभूदिति कृतम् यदा तु टेरित्यनुवर्त्य सम इत्युच्यते तदा न किञ्चिदुष्टमिति तत्त्वप्रकाशिकायां स्पष्टम्॥२८॥

सार्वधातुकार्द्धधातुकयोः नतु पित्सार्द्धधातुकयोरित्येव कर्तव्यमार्द्धधातुकसाहचर्याद्धातोरित्युत्रायं विहितस्य पितोग्रहणात्सुलु इत्यादौ न दोषः सार्वधातुकमपिदिति सूत्रं मास्तु समाधान साहचर्यमनित्यत्वज्ञापनार्थत्वं सूत्रस्येति कृत्वोर्थग्रहणं सूत्र इति न्यासेन शेखरे खण्डितमेव ॥ फलन्तु सिजभ्यस्तविदिभ्यश्चेत्यत्र सिच साहचर्यमनादृत्याभ्यस्तात्परस्य ङित् सम्बन्धिनो लङस्थानिकस्यापि झेर्जुस्सिद्धोऽदद् यवोभूरिति पण्डिताः वस्तुतस्तु सार्वधातुकमपिदिति नसादीनां ङित्त्वार्थं तेन इतोऽद्य इत्यादावनुनासिकलोपः शहिष्यादिषु सम्प्रसारणादि संस्रवति न

च तिङः पित्संज्ञाविज्ञानादपि तिङ् दुर्लभ इति वाच्यम् तिङ्संज्ञाविधावौपदेशिकपित्त्वस्य सामर्थ्यं नाश्रयणात्सार्वधातुकप्रदेशे तु पिद्ग्रहणमेवास्तु किञ्च अपिद्ग्रहणमसंयोगाल्लिट् किदित्युत्तरार्थमपि वाच्यम् पिदार्द्धधातुकयोरिति तु पितिङितीति निषेधादौपदेशिकपित्त्वेव प्रवर्त्तेति न दोषः कैश्चिदिति चेत् प्रदेशेषु पित्पदेन कृत्रिमस्यैव ग्रहणेनाभ्यस्तस्याचि पिति इतिनिर्देशेपि कृत्संज्ञको यः पिदौपदेशिक इत्यर्थं स्यादव्युत्पत्तिपि शास्त्रे उभयगतिविज्ञानात्तस्यानुदात्ते ङिच्चदुपदेशात्सार्वधातुकमिति पिदित्युच्यमाने एवं श्नुचोऽपिति रुदादिभ्यः पिति तुक्स्तुसम् यमः पिति यक् पिति चङ्गत् पितो दीर्घ इत्यादौ संदेहापत्तरेव स्यात् कृत्रिमपितो ग्रहणे सत्यपि चेत् ङीत्त्वस्यैवाभावे सुप्तिङन्तस्येति पदत्वानापत्तिस्तथा च कदिहीत्यादौ सिड्ङतिङ इति निघातानापत्तिः उभयोः संज्ञासंज्ञयोर्य इष्यं पूर्वं घवेत्युक्तम् अथ पित्संज्ञा न क्रियते सार्वधातुकप्रदेशेषु सञ्ज्ञिनिर्देशोऽस्तु तिङ्शिदिति सार्वधातुकसंज्ञायान्तु तिङ्शब्दादार्द्धधातुकयोरित्यादि आर्द्धधातुकतिङ्शिदिति वक्तव्यम् लिट् चेति वचनलिङादेशस्तिङार्द्धधातुकत्वं यत्र शितोसंभवस्तत्र तिङ्ग्रहणमेव सार्वधातुकस्यत्ते का-

प्यप्रामाख्येनावाकचोऽनभिधानमेवेति पण्डिताः वस्तुतस्तु समः समौति सूत्रे ऽकचोऽभिधानक- ल्पनं भाष्यप्रामाख्येन नोपलभ्यामहे किन्तु इद- मोम्शादेशे ऽप्यनुदात्त इति सूत्रे भाष्ये विधिवा- क्यस्थितहस्तय इत्यकच् न स्नायत इत्युक्तम् तत्रा- प्यप्रामाख्येनावाकचोऽभावे सिद्धित्युक्ते रूपावि- र्भावोक्तिः शेखरस्य युक्तैव किंच सम्यगर्थसशब्दे कुत्सासम्भवोऽपि नास्ति सूत्रकारेण तु समिय- ङ्यां विष्वगदेवयोरित्यतष्टे रित्यनुवृत्तिर्माभूदिति क्रतम् यदा तु टेरित्यनुवर्त्य सम इत्युच्यते तदा न किञ्चिदृष्टमिति तत्त्वप्रकाशिकायां स्पष्टम्॥ ३८॥

सार्वधातुकार्धधातुकयोः ननु पिदार्धधातु- कयोरित्येव कर्तव्यमार्धधातुकसाहचर्याद्धातोरि- त्युक्तार्थं विहितस्य पितोर्ग्रहणात्सुलु इत्यादौ न दोषः सार्वधातुकमपिदिति सूत्रं मास्तु समाधा- नं साहचर्यमनित्यज्ञापनार्थत्वं सूत्रस्येति क्रत्यो- र्थग्रहणं सूत्र इति न्यासेन शेखरं खण्डितमेव ॥ फलन्तु सिलभ्यस्तविहिभ्यर्थत्वन सिच् साहचर्य- मनादृत्याभ्यस्तात्परस्य ङित् सम्बन्धिनो लङ- स्थानिकस्यापि झेर्जुस्सिद्धोऽदद् पवोभूरिति पण्डिताः वस्तुतस्तु सार्वधातुकमपिदिति नसा- दीनां ङित्वार्थं तेन इतोऽस्य इत्यादावनुनासि- कलोपः यङ्ङ्यादिषु सम्प्रसारणादिसंरक्षति न

च तिङः पित्संज्ञाविज्ञानादपि तिङ् दुर्लभ इति वाच्यम् तिङ्संज्ञाविधावौपदेशिकपित्त्वस्य सामर्थ्यनाश्रयणात्सार्वधातुकप्रदेशे तु पिद्ग्रहणमेवाऽस्तु किञ्च अपिद्ग्रहणमसंयोगाल्लिट् किदित्युत्तरार्थमपि वाच्यम् पिदार्द्धधातुकयोरिति तु पितिङितीति निषेधादौपदेशिकपित्स्येव प्रवर्त्तेतेति न दोषः केचिदिति चेत् प्रदेशेषु पित्पदेन ङित्त्विमस्यैव ग्रहणेनान्यस्तस्यापि पिति इतिनिर्देशेपि ह्रस्वसंज्ञको यः पिदौपदेशिक इत्यर्थं स्याऽवग्रकत्वेपि शास्त्रे उभयगतिविज्ञानात्तस्यानुदात्तं ङिदद्दुपदेशात्सार्वधातुकमिति पिदित्युच्यमाने एव श्रुचोऽपिति रुदादिभ्यः पिति तुरुस्तुसम् यमः पिति यक् पिति चङ्कत् पितो दीर्घं इत्यादौ संदेहापत्ते रेव स्यात् ङित्त्विमपितो ग्रहणे सत्यपि चेत् ङीत्त्वस्यैवाभावे सुसिङ्क्त्वस्येति पदत्वानापत्तिस्तया च कदिङीत्यादौतिङ्ङतिङ इति निघातानापत्तिः उभयोः संज्ञासंज्ञयोर्ग्रहणं पूर्वं एवेत्युक्तम् अथ पित्संज्ञा न क्रियते सार्वधातुकप्रदेशेषु सञ्ज्ञनिर्देशोऽस्तु तिङशिदिति सार्वधातुकसंज्ञायान्तु तिङशब्दादार्द्धधातुकयोरित्यादि आर्द्धधातुकतिङशिदिति वक्तव्यम् लिट् चेति वचनलिङादेशस्तिङाद्धधातुकत्वं यत्र शितोसम्भवस्तत्र तिङ्ग्रहणमेव सार्वधातुकस्थले का-

यं सार्वधातुकमपिदिति तिङ्शिदपिदिति वक्तव्यम् । तिङ्शिति वगित्यत्र धातोरित्युक्तार्थं विहितनिङ् शितिपदविधानाच्चिनोदुत इत्यादौ कर्मणसि न दोषः शिदार्धधातुकयोरित्यत्रार्धधातुकसाहचर्याद्दीडीनित्यादौ न गुणः अपितः शितो ङित्त्वं च वेविङीतीति गुणो दुर्वारइति वाच्यम् । एवं तर्हि धातोस्तिङः शिदपिदिति वक्तव्यम् विहितविशेषणत्वाददोष इति केचिद्वदन्ति॥२८॥

इदुदुपधस्य चाप्रत्ययस्य अत्र सूत्रे एकादेशशास्त्रनिमित्तविसर्गस्थानेऽनेन सूत्रेण न षः कस्कादिषु भ्रातुष्पुत्रस्य पाठादिति अत्र पूर्वपक्षः षत्वतुकोरसिद्ध इति षत्वे कर्तव्ये एकादेशस्यासिद्धत्वादिदुदुपधस्येत्यस्याप्रवृत्तेः कस्कादिपाठसामर्थ्यात्षत्वमिति मातुः क्षुपेत्यादौ संवेचनासीति तत्र पदान्तपदाद्योरेकादेशस्यैवासिद्धत्वमिति भाष्यसिद्धान्तात् तेन ज्ञापकत्वं सम्यगेव तेन परिवीषुपरिवीषु इत्यादौ षत्वमिति व्याख्येभ्यां क्विपि यङ्ग्व्येति सम्प्रसारणे पूर्वरूपे हल् इति दीर्घे आदेशप्रत्यययोरिति सुपः सस्य षत्वं कर्तव्ये पदान्तपदाद्योरेकादेशाभावात् पूर्वरूपस्य नासिद्धत्वमन्यथाऽकारेण व्यवधानादिणः परत्वाभावात्सस्य षत्वं न स्यात् यथाक्षचेष्कच मित्यत्रापि सिद्ध एकादेश इति च्छेचेति तुक् न च

स्तुतस्तु इग्यणः सम्प्रसारणमित्यत्र साचः सम्प्र-
सारणमित्येव सूत्रमस्तु सम्प्रसारणाच्चेति मास्तु
हृषेच्छत्र अजयेच्छत्रमित्यत्र तुक् निवृत्त्यर्थः । प-
त्वतुक्पदान्तपदाद्योरेकादेशो सिद्ध इति निय-
मो स्वीकार्यः एवञ्च भ्रातुष्पुत्रशब्दः कस्कादिषु
विध्यर्थ एव न ज्ञापक इति समाधानं विभाव
यन्तु सुधिय इति पण्डिताः । वस्तुतस्तु हृषे-
च्छत्रमित्यादावसिद्धत्वे पदान्ताद्वेति नियमं वि-
ना न सिध्येदतो नियमोऽयमावश्यक एतन्निय-
माश्रयणात्सम्प्रसारणङीप्सु सिद्ध एकादेश इति
वक्तव्यमिति वार्त्तिकं कर्त्तव्यं भवति शकहूषु प-
रिवीषु वृक्षेच्छत्रं अजयेच्छत्रं इति वार्त्तिकोदाह-
रणानि नियमे एव सिध्यन्ति अत्र नियमे शंकितं
भाष्ये यदि पदान्तपदाद्योः एकादेशोऽसिद्धस्तर्हि
घोपधीक्ष्रूधीत्यत्रासिद्धत्वाभावे षत्व प्राप्नोति श-
सिपूर्वसवर्णदीर्घे तस्य रुत्व विसर्गे कः सुत इति
कुप्वधिकृतेष्वनिदितेरिति सत्वे तत्र समाहितं भा-
ष्यकारेणैव कस्कादिषु भ्रातुष्पुत्रस्य पाठादेका-
देशात्परस्य न षत्वमिति ज्ञापकस्य सजातीया-
पेक्षया कुप्वोः परत एव न षत्वं तेन शकहूमेप-
रिवीष्वित्यादावदोषः षत्वतुकोरसिद्ध इत्यत्र पूर्व-
पदान्तपरपदाद्योरेकादेशोऽसिद्ध इति व्याख्यातं
तत्रैव भाष्ये तेन पदान्तपदाद्योरिति नियमे सि-

हे सिद्धं सनत्कुमारमित्यादिपदशब्देन पदयोग्यो
ऽपि गृह्यते अधीत्य प्रेत्येति भाष्योदाहरणात् प-
रिविपूर्वस्य व्येञः क्विबन्तस्य तुगभावः परिवीयेति
ल्यबन्ते च न तुक् अनभिधानात् तदुक्तं प्रत्यय
लक्षणमित्यत्र भाष्ये । वक्ष्यति चात्र परिहारं सू-
त्रापि परिवीरिति शास्त्रपरविप्रतिषेधेन परत्वा-
द्दीर्घत्वं भविष्यतीति आशयमाह कैयटः सति
प्रत्यये सत्कार्यं भवति तल्लुप्तेऽपि भवतीति सू-
त्रार्थः परिवीयेत्यादौ च सति प्रत्यये दीर्घो दृष्टो
न तुगिति परिवीरित्यत्रापि दीर्घ एव भवतीति
एतेनाधीत्य प्रेत्येत्यत्र तु दीर्घो दृष्टो तेनात्र तु-
क्यसिद्ध इति युक्तैव अतएव औपधीत्यत्रासिद्ध-
त्वान्न च इति भाष्ययोरविरोध इति केचित्॥ १०॥

आडजादीनाम् न आडादीनामपि लङ्लुङ्
लृङ्क्ष्वित्यडेवास्तु किमनेन सूत्रेण आटश्चेति
अटश्चेत्येवास्तु अलपोऽडसन्नित्यत्राड् गार्ग्यगालव-
योरिति लोपोऽडागमे वृद्धिस्तु न अटश्चेत्यत्रोपस-
र्गादृति धाताविल्यतो धाताविल्यपकृष्यते तेन धा-
त्ववयवेऽच्येव वृद्धिरिति न दोषः आगुदात इत्यत्र
तु अडिति वक्तुमशक्यः बहुश्रेयसे पत्ये इत्यादौ
वृद्धिबाधकमतो गुण इति पररूपं वा भूदिति
अड्विधानन्तु बहुश्रेयस्यामित्यादौ नुड्बाधनेन
चरितार्थमटश्चेति धात्ववयवेऽच्येव प्रवर्तते आ-

टि सति तु वृद्धिरेचीति वृद्धिरित्याटश्चेति सूत्रस्थ-
शेखरग्रन्थः अट्धातोश्शेखरे तु आटश्चेत्येवास्तु
आतीदेधतेत्यादौ तु न दोषः अतोगुणे नाटइति
न्यासेन सिद्धत्वात् एवञ्च वहुश्रेयस्यै इत्यादावा
टश्चेति वृद्धिं विधाय पररूपबाधकमुभयथा वहुश्रे-
यस्यै इत्यादौ पररूपं स्यादेव मण्ड्या इत्युक्तं स्या-
त् याटोः दीर्घान्तत्वान्नास्ति पररूपशंका तथापि
परं रूपं परत्वात्स्याद्वहुश्रेयस्यै इत्यादौ तदर्थ-
माण्ड्या इति वक्तव्यमटश्चेति चकारेण पुनर्वृद्धि-
विधानं बाधकबाधनार्थं तेनार्येनैवाटः पररूप-
मात्रं न इति न्यासेऽपि तद्देव ओमाङोश्चेति
न वक्तव्यमिति भाष्योक्तेरुभयथाऽप्योमाङ्भ्याट
इति नारम्भणीयमिति पण्डिताः नमाङ्योगे इ-
ति सूत्रे आडजादीनामिति प्रत्याख्यानपरभाष्य
न्वजादीनामटासिद्धं इहार्थमिति चेदटः षष्ठमो
हसतीत्यत्र धातौ वृद्धिमटः स्मरेत् कथमिति चे-
द्योगविभागः करिष्यते अटः अचिवृद्धिर्भवति ततः
उपसर्गादृति वृद्धिर्भवति ततो धातावित्युभयोः
शेषः अतो भाष्यप्रकारप्रत्याख्यानं स्पष्टमायाति
आटोदित्यादौ पररूपबाधकोक्तम् पररूपंगुणेनाट
इति अनेनैव सिद्धे उस्योमाङिति न वक्तव्यं भव
तीति सदोमाडोश्चेति तत्समर्मिति वहुश्रेयस्यै इ-
त्यादौ वृद्धिस्तु इति से पररूपे निषिद्धे प्रतिवस्य

काभावादृवृद्धिरेचिलिव चत्र पद्ये चागूढा इति व
तुं शक्यः चटथेति चकार चोमाङोश्चेति चकार
उस्योमाङिति पररूपनिषेधार्थं च वार्तिकं नाश्र-
यणीय भवति चटथेत्यत्र भाष्यरीत्यातु चाट
इति यणुयकारेण पररूपवारणे सिद्धे उस्यो-
माङिति न कर्तव्य धात्वपकर्षेणाटश्चेत्यथा
पकर्षेणाप्राप्ता चागूढा इति दीर्घोच्चारणमावश्य
वा वृद्धिरेचीति वाधित्वापररूपापत्तेः न चाङ्विधा-
नसामर्थ्यात्पररूपाभाव. शक्यः चगूढा इति व-
क्तव्यं नाङ् इति गौरवान्न कर्तव्यमित्याह । केचि
त्तु, वा सुप्यापिशलेरित्यत्रापि शक्तिग्रहणेनैव सिद्धे
वाग्रहणमट इत्यत्रानुवृत्त्यर्थस्व्यवस्थितविभाषार्थं
तेनाखपोऽसनवकृष्येयस्यै इत्यादि सिद्धं धात्वप
कर्षो ह्यर्थ चकारकरणं दीर्घोच्चारणमाट इति
न कर्तव्यमेव एवञ्चाटस्याटोदीर्घोच्चारणमागूढा
इत्यत्र दीर्घोच्चारणमप्यनावश्यकमेव व्यवस्थितवि
भाषया सिद्धेः यद्वा शरावयवागुल्यादौ हस्वा
दृ॰ऋ॰खरित्यादिनिरूढव्यवहाराद्वाट् स्याटोऽका
रोकारस्याप्यवयव इत्यट् इति हृदि. सिद्धेत्याहुः
न चाङ्वाटीनामिति छन्दसि हलन्तं चपुनश्च
चाविरत्यादौ दीर्घान्तमिति वाच्यम् छन्दोर्थ यदु
त दीर्घो दृश्यत तद्यथा पुरुषो नाह इति भाष्ये
समाधानात् न चैवाम्योर्लाङ्क्षौ इषो यणिति

यणिति असोरल्लोप इत्यल्लोपे अटि आयन्नासन्निति न सिद्ध्येदिति वाच्यम् इणस्त्योरन्तरङ्गत: इडागमेऽट इति हृद्ये नास्ति दोष: इणो यणित्यनेनैवाच इत्यत एरित्यपकृष्ट: असोरल्लोप इत्यचादिति तत्प्रकरणात् यथाद्यणल्लोपयोरप्राप्तेन चागमेऽपि वर्णादाङ्गमिति न्यायात्प्रागेव यणल्लोपौ प्राप्तुत: इत्याद्युचनमिति वाच्यम् इणस्त्योरन्तरगत इति भाष्यात् चक्षो:शुङिति सत् ह्मनिर्देशाच्चे यमनित्याऽभ्यर्थांगत्वाच्चस्य शादेशे तुक्तोऽप्रात्यास निर्देशो व्यर्थ स्यादिति भाष्ये ध्वनितम्।२१।

भूवादयो धातव: क्रियावाचिन: किम् या: पश्यति न चास्य याशब्दस्य लाक्षणिकत्वान्न धातुसंज्ञेति वाच्यम् अवादिषु लाक्षणिकानामपि च ह्वत्यादीनां दर्शनेनैतद्विषये तत्परिभाषायाऽप्रवृत्ते: नकारजावनुस्वारपञ्चमौ झलि धातुषु सकारजश्शकारश्चेत् षाट्टवर्गस्तवर्गज इत्यभियुक्तोक्तेरिति मनोरमोपरि शब्दरत्नग्रन्थ: चत्वार्य पूर्वपक्ष: धातुसंज्ञाप्रति अनुस्वारसवर्णादीनामसिद्धत्वेन प्रतिपदोक्तत्वेनासमावे न लाक्षणिकपरिभाषया पश्यतीत्यत्र दोष इति शब्दरत्नग्रन्थोऽसङ्गत: किञ्च क्रियावाचिन, किमित्यस्य वा करोति वा भवतीत्यत्र प्रत्युदाहरणं सम्भवति वाशब्दस्य धातुत्वेऽधातुरिति निषेधात्प्रातिपदिकत्वाभावे सुपोऽनु

दपच्यापदत्वाभावात्तिङ्ङतिङ इति निघातो न स्यात् अत्र समाधान अर्थवत्सूत्रेऽधातुग्रहणस्य त्यागेन वा करोतीत्यादावदोषः न चाहन्नित्यत्रापि प्रातिपदिकत्वेन लोपापत्तिरिति वाच्यम् न लोपोऽतिङ् इति न्यासेन वारणात् राजीयतीत्यादौ तु न दोषः प्रत्यासत्त्या तिङन्तनिरूपित यत्र पदत्व तन्निमित्तात् परस्य लोप इत्यर्थाद्रामानित्यादौ तु नलोपो न अन्यथा तस्मात्त्सोलोपः इत्येव ब्रूयादिति पण्डिताः वस्तुतस्तु वाशब्दैर्निपातसंज्ञाप्राप्ता सा धातुसंज्ञाया बाधिका भविष्यति धातुसंज्ञा भवतीत्यादौ चरितार्था निपातसंज्ञा चाहप्रभृतिषु चरितार्था वा शब्दस्य परत्वान्निपातसंज्ञैव या पराऽनवकाशा चेत्याकडारादेकेत्यत्र सूत्र जकालसूत्रे च भाष्ये प्रसिद्धत्वात् अन्तरङ्गत्वन्तु भ्वादिवादिगणसापेक्षत्वेनोभयो संज्ञयो सममेव गणोपस्थितशब्दबाहुल्येन वहिरङ्गता तु धातुसंज्ञाया एव भुवश्च महावशाहतेरित्यत्र महाव्याहृतिग्रहणात् यावत्पुरानिपातयोरित्यत्र निपातग्रहणाच्च निपाते प्रतिपदोक्तान्यवस्थेति मनोरमादिग्रन्थकाराशय. प्रातिपदिकसंज्ञा या निपातसंज्ञाबाधिकैवाविरोधात् निपातःप्रातिपदिकमिति विशेषवचनात् रामानित्यादौ सस्य लोपस्तु न हल सश्चनत्वे नलोप तस्यासिद्धत्वाद्राम

मासयतीत्यादौ दीर्घाभावे तुक्कोभावार्थं त्वात्तस्येति अथ धातुग्रहणप्रत्याख्याने यदा ग्रहणवास्ति चेत्तर्हीत्थं न्यस्यतां नल्लोपःप्रातिपदिकान्तस्येति तावतापि भा व्याइयत्वाचव।दिति तत्त्वप्रकाशिकायां स्पष्टम्॥२२॥ अचःपरस्मिन्पूर्वविधौ अत्र शेखरः अत्रसूत्रे प्रयोगि योऽच्स्थानिक इत्यर्थौ नतु सूत्रे स्थानित्वेनोद्दिश्य ताच स्थानिक इत्यर्थस्तेनणिल्लोपादेरनेनस्थानिव त्त्वं सिध्यति अतएव चङ्परनिर्ह्रासेग्लांताश्वि अवीभवदित्यादि सिद्धार्थो निषेधः सार्थकः इति दुदुव इत्यत्र शेखरोक्तप्रयोगः परनिमित्तकत्वाभावे· पि शपः परनिमित्तत्वेन परंपरया लोपनिमित्तत्वेन स्थानितया ऽचादेशस्याभावेनस्थानिवत्त्वाभावाच्छ्य् त्वमाश्रित्य नगुण इत्युक्तम् तत्पूर्वापरविरुद्धम् वस्तु तोऽकारस्यैव लुप्त्वेन स्थानिवत्त्वस्यदुर्वारत्वादिति पं डिताः तत्रेत्थं विरोधपरिहारः साक्षात्परनिमित्त कता तत्र प्रायोगिकस्थानिता परंपरया प्राप्तायां सौत्रस्थानितेति एवमेवचि प्रयोगाणां गतिर्भवति नान्यथेति बोध्यम् यत्तु वैरित्यत्रस्थानिवत्त्वेन उपा त्ताच् स्थानिसत्वाचङ् परनिर्ह्रासे इति वचनं वारि तार्थ्यदशेषे इत्यादौ चरितार्थमतः सूत्रे एवाच् स्था निक इत्युक्तेः सर्वेष्टसिद्धिरित्युक्तम् तन्न टिपदेनाच एव ग्रहणादचादेशाभावेनादोषात् अतएव मृत माचष्टे मारयतीति वृद्धीकृतायां नस्थानिवद्भाव इ ति दिक् ॥२३॥ इत्युत्तरपक्षावली समाप्ता॥ श्रीः

रपच्यापदत्वाभावात्तिङ्ङतिङ इति निपातो न स्यात् अत्र समाधानं अर्थवत्सूत्रेऽधातुग्रहणस्य त्यागेन वा करोतीत्यादावदोषः न चाहन्नित्यत्रा पि प्रातिपदिकत्वेन लोपापत्तिरिति वाच्यम् न लोपोऽतिङ् इति न्यासेन वारणात् राजीयतीत्या दौ तु न दोषः प्रत्यासत्त्या तिङन्तनिरूपित यत्र पदत्व तन्निमित्तात् परस्य लोप इत्यर्थात्रामानि त्यादौ तु नलोपो न अन्यथा तस्मात्सोलोपः इत्येव ब्रूयादिति पण्डिताः वस्तुतस्तु चाशब्देनि पातसंज्ञाप्राप्ता सा धातुसंज्ञाया बाधिका भवि ष्यति धातुसंज्ञा भवतीत्यादौ चरितार्था निपात संज्ञा चाह प्रभृतिषु चरितार्था वा शब्दस्य परत्वा न्निपातसंज्ञैव वा पराऽनवकाशा चेत्याकडारादे केत्यत्र सूत्रे ऊकालसूत्रे च भाष्ये प्रसिद्धत्वात् अ न्तरङ्गत्वन्तु भ्वादिवादिगणसापेक्षत्वेनोभयोः सं ज्ञयोः सममेव गणोपस्थितशब्दग्राहकत्वेन बहिरङ्ग ता तु धातुसंज्ञाया एव भुवश्च महाव्याप्तेरित्यत्र महाव्याप्तिग्रहणात् यावत्पुरानिपातयोरित्यत्र निपातग्रहणाच्च निपाते प्रतिपदोक्तत्वमप्यस्ति मनोरमादिग्रन्थकाराशयः प्रातिपदिकसंज्ञा या नि पातसंज्ञाबाधिकैवाविरोधात् निपातःप्रातिपदि कमिति विशेषवचनात् रामानित्यादौ सस्य लोप स्तु न कृतः सस्य नत्वे नलोपे तस्यासिद्धत्वाद्राम

मासयतीत्यादौ दीर्घाभावे तुकोभावार्थं त्वात्तस्येति
षष्ठधातुपदव्याख्याने यश्च यङ्लुवास्तिवेत्तर्हीत्थं
न्यसतां नलोपः प्रातिपदिकांतस्येति तावतापि मा
त्रादयलाघवादिति तत्त्वप्रकाशिकायां स्पष्टम्॥३२॥
अचःपरस्मिन्पूर्वविधौ अत्र शेखरः अत्रसूत्रे प्रयोगे
योऽच्स्थानिक इत्यर्थो नतु सूत्रे स्थानित्वेनोद्देश्य
ताच स्थानिक इत्यर्थेनैवणिलोपादेरनेनस्थानिव
त्त्वे सिध्यति अतएव चङ्परनिर्ह्रासेऽग्लोपिचि
पवीभवदित्यादि सिद्धार्थौ निषेधः सार्थकः इति
दृढव इत्यत्र शेषरीतप्रयोगः परनिमित्तकत्वाभावे-
ऽपि अपः परनिमित्तत्वेन परंपरया लोपनिमित्तत्वेन
स्थानितयाऽजादेशस्याभावेनस्थानिवत्त्वाभावाच्छप्
त्वमाश्रित्य नगुण इत्युक्तम् तत्पूर्वापरविरुद्धम् वस्तु
तोऽकारस्यैव स्तुत्वेन स्थानिवत्त्वसद्भावात्वादिति पं
डिताः तत्रेत्थं विरोधपरिहारः साक्षात्परनिमित्त
कता तत्र प्रायोगिकस्थानिता परंपरया प्राप्तायां
सौत्रस्थानितेति एवमेवहि प्रयोगाणां गतिर्भवति
नान्यथेति बोध्यम् यत्तु वैरित्यत्रस्थानिवत्त्वेन उपा
त्तात् स्थानिसत्वाचङ् परनिह्रासे इति वचनं वारि
भाष्यदलोव इत्यादौ चरितार्थमतः सूत्रे एवाच् स्था
निक इत्युक्तेः सर्वेष्टसिद्धिरित्युक्तम् तन्न टिपदेनाच
एव ग्रहणादजादेशाभावेनादोषात् अतएव मरुत
माचष्टे मारयतीतिवृद्धीकृतायां नस्थानिवत्ताय इ
ति दिक् ॥३३॥ इत्युक्तपद्यावली समाप्ता॥ श्रीः